॥ श्रीः ॥

# नानकादिगुरुस्तोत्रम् ।

पण्डितकमलाधरविरचितम् ।

पण्डितलक्ष्मीनारायणविरचित-
नवकह्लारामोदाख्यया,
ग्रन्थकारविरचितगुरुस्तवदीपिकया च
व्याख्यया समेतम् ।



तदेव
क्षेमराज-श्रीकृष्णदासश्रेष्ठिना
मुम्बय्यां
( खेतवाडी ७ वीं गली खम्बाटा लैन )
स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणयन्त्रालये
मुद्रयित्वा प्रकाशितम् ।

संवत् १९६७, शके १८३२.

अप्राप्य

॥ श्रीः ॥

# नानकादिगुरुस्तोत्रम् ।

पण्डितकमलाधरविरचितम् ।

पण्डितलक्ष्मीनारायणविरचित-
नवकह्लारामोदाख्यया,
ग्रन्थकारविरचितगुरुस्तवदीपिकया च
व्याख्यया समेतम् ।



तदेव
क्षेमराज-श्रीकृष्णदासश्रेष्ठिना
मुम्बय्यां
( खेतवाडी ७ वीं गली खम्बाटा लेन )
स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणयन्त्रालये
मुद्रयित्वा प्रकाशितम् ।

संवत् १९६७, शके १८३२.

॥ श्रीः ॥

# अथ नवकह्लारामोदव्याख्या-

## मङ्गलाचरणम्।



श्रीभवक्रमतिमानदमम्बां शंभुचक्रिकमलासननाम्नः ।
देशिकेन्द्रचरणाम्बुजमद्यसन्दधे मनसि नाम विपङ्के॥ १॥
कमलचत्वरदीपकमानतः कमलजाङ्गगतं कमलं करैः ।
कमलकाननकान्तिकरं खगं कमलमेकममाकुलचेतसाम् २

"एष विष्णुः शिवश्चैव गणाध्यक्षः शिवा रविः । पञ्चमूर्त्तिरयं देवः पूजितेऽस्मिन्सुपूजिताः ॥ वस्तुतः सर्वदेवोऽयं प्रत्यक्षो नान्यदेवता ।" इति मनसि निधाय पञ्चपद्यै रविं स्तौति-**कमलेति**। कानि जलानि मलति धारयत इति कमलो रविः तम् 'मल-धारणे' पचाद्यच् । 'कं शिरोंबुनोः' इति विश्वः। 'यथैव सूर्यात्प्रभवन्ति वारि' इति चतुर्थोक्तेः। आनतोस्मि आङ्पूर्वान्नमेर्निष्ठा । किंभूतम्-करैः रश्मिभिः कमलानां चत्वरस्य संवस्य दीपकं प्रकाशकम् । यद्वा-कमलं गगनमेव चत्वरम्

अङ्गणं तद्दीप्यतेऽनेनेति तथा । 'प्रतिबोधितकमलवनः' इति, 'हरित-हयनिकरपरिकरभास्करगगनाङ्गणदीपक नमस्ते' इति चार्यास्तवोक्तेः । 'गगनं कमलं व्योम' इति कोशात् । पुनः—कमलात् जलात् जायत इति कमलजं पद्मं तस्याङ्के मध्ये गतम् 'सरसिजासनसंनिविष्टः' इत्यादित्यस्तवोक्तेः । यद्वा—कमलजमङ्कं गतं यस्य स तथा तम् 'करधृतकमलः पातु मां विश्वचक्षुः' इति, 'स मे भवतु सुप्रीतः पद्महस्तो दिवाकरः ।' इति च तत्रैवोक्तेः । पुनः—कमलवनशोभाकरम् 'प्रतिबोधितकमलवनः' इत्यार्यास्तवोक्तेः । 'पुनरुक्तिर्न दोषाय भयस्नेहस्तवेषु च' इति साहित्यदर्पणोक्तेः । पुनः—खं गगनं गच्छति सातत्येनेति खगः तम् । पुनः—अमैः रोगैः आकुलानि ग्रस्तानि चेतांसि येषां तेषाम् । एकं मुख्यं कं सुखं मलते धारयति इति कमलः तम् "वाताश्मरीदुर्नामत्वग्दोषमहोदरप्रमेहांश्च । ग्रहणिभगंदरमुख्या महारुजस्त्वमिन संहरसि ॥" इत्यार्यास्तवोक्तेः । "विधिरविजलजांबु व्योमविष्णू सरांसि गदहरहरिपद्माचंद्रचांद्राँह्लिभेदात् । बहुविधकमलार्थाञ्छास्त्रपर्यावलोकाद्विविधकोशकारास्संवदन्ति प्रवीणाः ॥" इति निरुक्तिप्रकाशात् । यद्वा—अहं खगं खमाकाशं गच्छति सततमिति खगो रविः तम् आनतोऽस्मि सर्वतः नतोऽस्मि 'अग्रतस्तु नमस्तुभ्यं पार्श्वतस्तु सदा नमः ।

१ 'लि' पदं लिङ्गवाचकमिति मुग्धबोधे बोपदेवः ।

पृष्ठतस्तु नमस्तुभ्यमू' इत्युक्तेः । कमलं व्योम तदेवाङ्गणं तस्य दीपं यथाङ्गणं गृहमध्यानाच्छन्नदेशश्चत्वरं तत्रगो दीपस्तं प्रकाशयति तथा गगनाङ्गणं प्रकाशयतीति भावः । 'अङ्गणं चत्वराजिरे' इति, 'कमलं पद्माम्बुव्योमसु' इति च शब्दार्थाकरात् ॥ ( १ ) ॥ २ ॥

**भगभगी भगदं भगिनां भगे भगभगे लभते कृपया यतः ।**
**भगरतो विभगोऽपि भगेन तं भगभगं भगवन्तमहं भजे ३ ॥**

तं भगवन्तं पूर्णषडैश्वर्यम् अहं भजे । तं कम्—यतो यद्भजनात् विभगो रंकोऽपि भगरतः ऐश्वर्ययुतो भवति, "इत्यार्याद्वादशकं साम्बस्य पुरतो नभस्तलात्पतितम् । पठतां भाग्यसमृद्धिस्समस्तरोगोपशान्ति-स्स्यात् ॥" इत्युक्तेः । पुनः—यतो यत्कृपातः भज्यते नश्यते ज्ञानेनेति भगः 'भंजो—आमर्दने' इत्यत औणादिको घक् । संसारः तस्मिन् । भगेन तेजसा भातीति भगभः तं गायतीति भगभगी । गायतेर्डिन्नौणा-दिकः। "संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे । कार्याद्विद्यादनूबन्धमेत-च्छास्त्रमुणादिषु" इति भगवत्पतञ्जलिना महाभाष्ये प्रोक्तत्वाद्भगवत्पाणि-निनाऽनुक्तेऽपि साधकसूत्रे विदुषा लक्ष्यमुद्दिश्य लक्षणकल्पनातोऽपि प्रयो-गास्साध्या इत्यलम् । तथा चेह लोके रविभक्तो भगभगे भोगामृते लभते 'भोगं मुक्तिं च लभते सर्वदार्कार्चनान्नरः' इत्यादित्यस्तवात् ।

यद्वा-भगेन योनिना भातीति भगभः स्त्रीजनः तेन गीयते सुतसौभा-ग्यार्थमिति भगभगः तम् "वन्ध्या स्यात्पुत्रिणी भक्त्या सवितारं तु या भजेत् । व्रतार्चनादिना सत्यं सौभाग्यान्न च्युता भवेत् ॥" इति भविष्यात् । "भगो मोक्षे गदे योनौ सूर्येऽक्षे संसृतौ धने । प्रतापैश्वर्य-विज्ञानपूफाभभंगुरेष्वपि ॥" इति निरुक्तिप्रकाशात् । पुनः—भगिनां संसारिणाम्, भगेन सेवनेन, भगदं सुखदम् "सौख्यमायुस्तथारोग्यं लभते मोक्षमेव च । आदित्यं सेवमानो ना सत्यंसत्यं प्रजाधिप ॥" इति भविष्यात् । पुनः—भगं पूफाख्यमृक्षं गच्छति प्राप्नोति स्वामित्वे-नेति भगगः तम् । "सर्पपित्राख्ययोन्यर्यमदिवसकराः" इत्याश्लेषादि-हस्तान्तभानां स्वामिनो मुहूर्तमञ्जर्यां यदुनाथेनोक्ताः । भजनं भगः 'भज-सेवायाम्' अतो घो भावे बाहुलकात् ॥ ३ ॥

**हरिगुरुं हरिपं हरिलोपकं हरिहरित्तिलकं हरितुण्डभम् ।**
**हरिरथं हरिभिर्हरिवेगिभिर्हरिहरिं च हरीनहरिं नुमः ॥ ४ ॥**

हरेः यमस्य गुरुं पितरम् नुमः । 'गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे । इत्युज्ज्वलः, किंभूतम्—हरेः सिंहराशेः पालकम् । हरति नृणां चक्षुंषि इति हरि तमः तल्लोपयति हरिलोपकः तम् । 'लुप—लोपे' चुरादिः । पुनः—हरेः इनस्य हरित् प्राची तस्यास्तिलकम् 'तिलकं

कुण्डले पुण्ड्रे इति हैमादेः । 'कुण्डलमाखण्डलाशायाः' इत्यार्योक्तेः । यद्वा—हरिहरिदुपलक्षितः उदयाचलः तस्य तिलकः तम् । तथा—'उदयाचलतिलकाय प्रणतोऽस्मि ग्रहेशाय ।' इत्यार्योक्तेः । पुनः—हरेः शुकस्य तुण्डं मुखाग्रं तद्वद्भातीति हरितुण्डभः तम् 'शुकतुण्डच्छविसवितृमण्डलम्' इत्युक्तेः । पुनः—हरिः वायुः तद्वद्वेगो येषां हरीणामश्वानां तादृग्घरिभिरश्वैः हरिरथं हरिद्वर्णरथम् । पुनः—हरन्ति नाशयन्ति देहमिति हरयो रोगा ज्वरापस्मारकाद्यास्तान्हरतीति हरिहरः तम् । "दद्रूस्फोटककुष्ठानि मण्डलानि विचर्चिकाः । ये चान्ये दुष्टरोगाश्च ज्वरापस्मारकादयः ॥ पठमानस्य नश्यन्ति जीवेच्च शरदां शतम् ।" इति भविष्ये । पुनः—हरीणां रोगाणाम् इनः स्वामी राजयक्ष्मा कुष्ठं वा तमपि हरतीति हरीनहरिः तम् । 'एकपदं क्वचिण्णत्वहेतुः' इत्युक्तेर्णत्वाभावः । "हरिरिन्द्रो हरिर्भानुर्हरिर्विष्णुर्हरिर्मरुत् । कीशाश्वयमनीहारतमोरोगपटच्चराः । हरयः सिंहचन्द्रास्त्रनृपतिगुरवस्तथा ॥" इति निरुक्तात् ॥ ४ ॥

**रसमुचं रसदं रससेविनां रसधरारिकसूनुकसारथिम् ।**
**रसकशुक्रसुनेत्रमनन्तकं रसिकसारससंघविलासकम् ५॥**
**वसुवसुं सुवसुं वसुदायकं वसुपवासवतातमनन्तगुम् ।**
**वसुवराहनमित्रजरोगहं वसुममुं भजके भवभंगदम् ॥६॥**

अथ युग्मेन स्तुवन्नाह-**रसमुचमिति** ॥ अहम् अमुं हृत्स्थं वसुं देवं भजके। त्यदादीनां बुद्धिस्थपरामर्शकत्वात्। "आख्याताव्ययसर्वनाम्नां प्रागकच् टेः" द्वयोरन्वयः। रसानि जलानि मुञ्चतीति रसमुक् 'यथैव सूर्यात्प्रभवन्ति वारि' इत्युक्तेः, 'आदित्याज्जायते वृष्टिः' इत्युक्तेश्च। पुनः-"रसो वै सः" इति श्रुतेः रसः परमात्मा, तं सेवितुं शीलानां रसिनाम्। रसो मोक्षः तं ददातीति रसदः तम् 'त्वत्तो मुक्तिं जनार्दनाकारात्' इत्युक्तेः। पुनः--रसो विषं तद्धरन्तीति रसधराः सर्पाः तेषाम् अरिको गरुडः स सूनुकः कनिष्ठो यस्य सोऽरुणः स सारथिर्नियन्ता यस्य तम्। 'सूनुः पुत्रेऽनुजे सूनुः' इति यादवः। 'सूर्यसूतोऽरुणोऽनूरुः' इत्यमरात्। रसेषु विषयेषु कं सुखं येषां ते रसकाः कर्मिणः, शुक्राः शुद्धा ज्ञानिनः 'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते।' इति श्रीमुखोक्तेः। रलयोरैक्यमत्रानुसन्धेयम्। तेषां सुनेत्रम्, त्रयीमयत्वात्। "त्रय्येषा विद्या तपति" इति श्रुतेः। अनन्तं कं सुख यस्मात्तमनन्तकम्। यद्वा--अनन्तमेव अनन्तकं कालरूपत्वात्। रसिकाः परस्परस्नेहिनो ये सारसाश्चक्रवाकाः तेषां संघस्य विलासकम्, तन्मेलकत्वात् 'कृतघटनश्चक्रवाकमिथुनानाम्' इत्यार्यातः। पुनः--वसुषु अष्टसंख्येषु वसतीति वसुवसुः तम् 'धृवो ध्रुवः सोमोऽहश्चैवानिलोऽनलः' 'पृष्णो द्रोणोद्भवोऽर्कोऽग्निः' इत्युक्तेः। पुनः--दिवः अन्तरिक्षस्य वसु धनं, प्रकाशकत्वात्। पुनः--

वसुदायकं धनदायकम्। पुनः--वसुपः कुबेरः, वासवः इन्द्रः, तयो-स्तातम्। त्र्यंबकरूपेण कुबेरस्य, वामनरूपेणेन्द्रस्येति विशेषः। 'एष-विष्णुः शिवश्चैव' इत्यादित्यहृदयात्। पुनः--'अनन्तं विष्णुवर्त्म खम्' इत्यमरात् अनन्तगुं खगमित्यर्थः। 'गमेर्डुः' उणादिः। यद्वा--अनन्ता गावः किरणा यस्य तम्। पुनः-वसुषु वरः श्रेष्ठः तं न हन्ति स्वस्थिताविल्यहनो वायुः "यावत्प्राणरूपो वायुरनुगस्तावन्न म्रियते।" इत्याबालगोपालप्र-तीतेः, तन्मित्रं तेजः (अग्निः) तदुपलक्षितं पित्तं तज्जरोगः कुष्ठः तद्धन्तारम्। पुनः-भवः संसारः तस्य भङ्गो मोक्षः तद्दातारम् 'त्वत्तो मुक्तिं जनार्दनाकारात्' इत्युक्तेः। रसोऽम्बुघृतदुग्धेषु विषज्ञानात्मब्रह्मसु। रसोऽमृतसुवर्णादावानन्दस्नेहमैथुने॥ रसः प्रिये धने पुंसि शृंगारादौ रसः स्मृतः। स्थायिभावो रसः प्रोक्तः पारदोऽपि रसो मतः॥" इति। "वसुर्धनं वसु मित्रं द्रोणाद्यष्टकमेव तत्। शुद्धं हि तद्वसु प्रोक्तं वसुदेवो वसुः स्मृतः॥ मुख्यं वसु गोधनं स्याद्वसु वस्त्रं वसु स्थितम्। वसु गोलं वसु वनं वासवोपि वसुः स्मृतः॥" 'वसु तेजो वसु ज्ञानं वसु मंग-लमिष्यते।" इति च निरुक्तिकोशात्। इति रविस्मरणमुखेन गणेशा-दिस्मरणमपि जातम्, श्रीसूर्यस्य प्रत्यक्षदेवतात्वादपरोक्षदेवापेक्षया प्रधान-त्वम्, "प्रधानेनोपदेशः" इति सूत्रात्। मम त्वित्थं प्रतिभाति न जाने तस्य कोऽभिप्राय इति वंशीधरः॥ ९॥ ६॥

धर्मात्मा पुष्पनामा समजनि नरपो मालवेन्द्रः सुखादि-
स्तस्मादग्र्यस्त्रिलोकादिमहारिरतुलश्चास्मकाच्चैनसिंहः ।
तस्माद्दानी सुमानी गजपतिहरिरो भूपसिंहस्ततस्तु
वासावासिंहनामा सुखमुखधरकः सिंहको हीरसिंहः ७॥

कुसुमनगरराजा मानितो राजराजै-
र्विपुलधनसुदाता वाडवेभ्यो बहुभ्यः ।
जगति परमतुष्टो दुष्टनष्टैककर्त्ता
जयतु विदितहीरासिंहनामा नरेन्द्रः ॥८॥

उदधिचन्द्रपरीक्षणतत्परो हरिभुजेन्दुसमोगुणवर्जितः ।
मुनिवसुद्विजराजदिगन्वितो जयतु हीरकसिंहनराधिपः ९

॥ श्रीः ॥

# अथ नानकादिगुरुस्तोत्रम् ।

## व्याख्याद्वयोपेतम् ।



दैत्येन्द्रसूदनकरीं भगदां भजद्भ्यो
हर्यादिभिः सुरकुलैः परिवन्द्यपादाम् ॥
देवीं प्रसन्नवदनां भवनाशकर्त्रीं
वन्दे विमानवरगां कमनीयरूपाम् ॥ १ ॥

अथ श्रीमत्सकललोकपालवृन्दवन्दितपदारविन्दकन्दश्रीजगदीश्वरीसेवनपरायणश्रीगोविन्दसिंहोक्तपौडीछन्दोऽनुरोधेनाखिलऽऽमरवरपुरटमुकुटपटलकोटितटपरिघट्टितपादपंकजसौरभानवटकटुकुटकूटखटान्तःपतितपुरुषो-

---

१ सौरभमेवानवटः समदेशः कटुः प्रियो येषां ते कुटाः कुटिलास्तेषां कूटः समूहः । खट्यते इष्यते येन स कलिस्तदन्तः पतिता ये । यद्वा—तेषां कूटस्य खटेच्छा यत्र सः कुसंगस्तत्र पतितोद्धरणकर्तेति सम्बन्धः ।

---

१ 'गर्तावटौ भुवि श्वभ्रे' इत्यमरः ।

द्धारणकर्तृश्रीमहाविष्ण्वभिन्नश्रीजगज्जननिस्तुतिपूर्वकं नानकादीन् स्तौति-दैत्येन्द्रेत्यादिना । ननु नानकस्याचार्याभावात्कथं तत्कीर्तनं श्रेयस्करमिति चेन्न विष्णोरेव तस्याचार्यत्वात्, कथं तन्मया स्वगुरुः श्रीहरिरत्रैव पृष्ट इति श्रीरागे तथा सोरठे च यत्सर्वविभासकं निरुपाधि विश्वव्यापकं तत्त्वं तदहमेव, तथाप्यपरं ब्रह्म मां स्वयमेव मिलितवानिति तेनैव स्वग्रंथेऽभिधानात् । अतो वेत्राख्यनद्यां वरुणादिद्वारा तमाहूय श्रीमन्नारायण एव त्रिदिनैरुपदिष्टवान् । अथ स एव तस्य गुरुरतस्तस्यैवाग्रे कीर्तनं युक्तं किं भगवत्याः कीर्तनेनेति चेन्न, तस्यास्तदभिन्नत्वात्, प्रतीहीत्थं तथा च हरिवंशे हरिप्रणीतोमास्तवे-"आवासः सर्वभूतानां निष्ठा च परमा गतिः" इति । तस्याः सर्वाधिष्ठानत्वं मुक्तप्राप्यत्वं चोक्तं तत्रैव-"लक्ष्मीरलक्ष्मीरूपेण दानवानां वधाय च" इत्यादिना "तया

ध्याप्तमिदं सर्वं जगत्स्थावरजंगमम्" इत्यंतेन। तस्याः सर्वात्मता चोक्ता। तथा भविष्योत्तरे उमयोक्तम्—"यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति। तस्याहं नित्यदेहस्था स च नित्यं मयि स्थितः॥ न पश्येत्सर्वभूतेषु न च सर्वं मयि स्थितम्॥ स तु पर्वतदुर्गेषु मार्गमाणो विनश्यति" इति। मात्स्ये च—"सर्वगा सर्वभूतेषु द्रष्टव्या परमेश्वरी॥ सर्वलोकेषु यत्किंचिद्विहितं न तया विना" इति। मार्कंडेये तु—"तया विसृज्यते विश्वं जगदेतच्चराचरम्॥ सैषा प्रसन्ना वरदा नृणां भवति मुक्तये॥ संसारबंधहेतुश्च सैव सर्वेश्वरेश्वरी॥" इत्यादिना। प्रागुक्तं सर्वं गौर्या दर्शितं सनत्कुमारसंहितायाम्—"विद्ये वेदांतगीते श्रुतिपरिपठिते मोक्षदे मुक्तिमार्गे मार्गातीतस्वरूपे" इत्यादिना। वेदांतोपपादकत्वादिकं सरस्वत्या उक्तम्—"सरस्वतीं नमस्यामि चेतनां हृदि संस्थिताम्। मतिदां वरदां चैव सर्वकामफलप्रदाम्॥ सुखमोक्षप्रदाम्"॥ इत्यादिना बृहस्पतिश्च

तत्सर्वं तस्या दर्शितवान्। "तस्याः समुद्रा अधिविक्षरंति तेन जीवंति प्रदिशश्चतस्रः। ततः क्षरत्यक्षरं तद्विश्व-मुपजीवति" इत्यादिश्रुत्याप्यस्या जगदुत्पादकत्वपाल-कत्वादिकमुक्तम्। "ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्।" इति लक्ष्म्याः सर्वेश्वरत्वं श्रूयते स्मर्यते च। जगत्कारणत्वसर्वात्ममोचकत्वादिकं वैष्णवे—"नमस्ये सर्वभूतानां जननीमब्जसंभवाम्। त्वं सिद्धिस्त्वं सुधा स्वाहा स्वधा त्वं लोकपावनी" इत्यादिना "शरीरा-रोग्यमैश्वर्यमरिपक्षक्षयः सुखम्॥ देवि त्वद्दृष्टिदृष्टानां पुरुषाणां न दुर्लभम्" इत्यंतेन। एवं च भवान्या दैत्यादिसंहर्तृत्वेऽपि पालनरूपविष्णुकार्यप्रतीतेः, 'नृणां भवति मुक्तये' इति मोचकत्वरूपसत्त्वावच्छिन्नकार्य-प्रतीतेः, महिषासुरयुद्धेऽसंख्यगणोत्पादकत्वरूपरजोऽ-वच्छिन्नकार्यप्रतीतेर्न केवलरुद्ररूपत्वनिर्णयः। ननु मोक्षप्रदत्वादिकमिदं महालक्ष्म्या उक्तं सा चान्यैव समष्टिरूपेति मार्कंडेयप्राधानिकरहस्यगततन्माहात्म्या-

लोचनेन बुध्यते तथा च कथमनेन पार्वत्या मोचकत्वा-
युक्त्या विष्णवादिरूपतोच्यत इति चेत्सत्यमेवं प्रतीयते
ऽल्पश्रुतानाम्, बहुश्रुतैस्तूमावतार एव सेति निर्द्धा-
र्य्यते । तथाहि मार्कंडेये तस्या महिषशुम्भादिहन्तृत्वं
नन्दपुत्रीत्वादिकञ्च यदुक्तं तत्सर्वं हरिवंशे गौर्यां
उक्तं तत्र तावत्प्रद्युम्नशम्बरयुद्धे—"हतायां सर्वमायायां
शम्बरोऽचिन्तयत्पुनः । अस्ति मे कालदण्डाभो
मुद्गरो हेमभूषितः ॥ पुरा यो मम पार्वत्या दत्तः परम-
तुष्टया । गृहाण शंबरेमं त्वं मुद्गरं हेमभूषितम् ॥
मायान्तकरणं नाम सर्वासुरविनाशनम् । अनेन
दानवौ रौद्रौ बलिनौ कामरूपिणौ ॥ शुम्भश्चैव निशुं-
भश्च सगणौ सूदितौ मया ॥" इति पार्वत्या एव ससैन्य-
शुंभादिहंतृत्वमुक्तम्, ततः शक्रप्रेषितनारदे मुद्गरवृत्तांतं
तदुपशांत्यै गौर्युपासनं चोपदिश्य गते सति दैत्येन
तस्मिन् गृह्यमाणे सति तदुत्पातान् द्वादशादित्योत्था-
नादीन्महोत्पातान् दृष्ट्वा प्रद्युम्नः शंभुप्रियां हृदि स्मृत्वा

भूमौ शिरसा प्रणम्य तुष्टाव—" ॐ नमः कात्यायिन्यै गुहस्य जनन्यै नमः । नमस्त्रैलोक्यमायायै कात्यायिन्यै नमोनमः ॥ नमस्ये शुंभमथिनीं निशुंभहृद्विदारिणीम् । विन्ध्यवासिनीं दुर्गघ्नां रणदुर्गां रणप्रियाम् ॥ त्रिशूलिनीं नमस्यामि महिषासुरघातिनीम् । सिंहवाहां नमस्यामि " इत्यादिना मध्यमोत्तमचरितोक्तं सर्वं गुप्तमंत्रविषयमुपपादितम् । प्रथमचरिते देवता तु योगनिद्रारूपा तामसी शक्तिः सा च रुद्रांतर्भूतैवेति न विवादः तथा च कथं दुर्गा मान्येति वाच्यम्, यद्यपि तत्र शुंभनिशुंभयोःशूलखड्गाभ्यां हननमत्र तु मुद्गरेणेति विरोधः,तथापि स कालभेदेनापास्तुं शक्यः, "वैवस्वतेऽन्तरे" इत्यादि भगवत्युक्तेः । हरिवंश एवानिरुद्धविष्णुकृते भीष्मपर्वणि पार्थकृते च स्तवे पुराणांतरगतोमामाहात्म्यवचनेष्वयमेवार्थः स्पष्टः, ग्रंथविस्तरभयान्नेह वचनानि लिख्यन्ते । यानि तूमादेर्महालक्ष्मीविभूतित्ववचांसि तानि विष्ण्वादेर्नृसिंहादिविभूतित्वबोधकवचांसीवोपासनार्थंस्तुतिरूपाणि

वस्तुतस्तु—'गौरी त्वमेव' इत्यादीनि साक्षादभेदपराण्येव "न मे नारायणाद्भेदो विद्यते हि विचारतः। तन्मयाहं परब्रह्म स विष्णुः परमेश्वरः॥" इति कौर्मे शिवयैव स्वस्य विष्णुरूपत्वमुक्तम्। "सदाशिवांकमारूढा शक्तिरिच्छाह्वया शिवा। महालक्ष्मीरिति ख्याता" इति शैवे। साक्षान्महालक्ष्मीरूपतो माया इत्युक्तम्। लक्ष्मीतंत्रे लक्ष्म्याः काल्यादेः स्वावतारत्वोक्तिरप्युभयोरभेदपरैव। "हिरण्यगर्भरुचिरौ स्त्रीपुंसौ कमलासनौ" इत्यादिप्राधानिकरहस्ये रमाया रजोऽवच्छिन्नब्रह्मरूपत्वं प्रतीयते अतोऽस्या न केवलविष्णुरूपत्वनिश्चयः। न चैतेनास्याः केवलं विधिरूपत्वमस्तु। कौर्मे—"इयं सा परमा शक्तिर्मन्मया ब्रह्मरूपिणी" इति विष्णूक्त्या विष्णुपुराणादिवचनैश्चास्या विष्णुरूपत्वस्यापि प्रतीतेः। एवम् 'मोक्षदे मुक्तिमार्गे' इत्यादौ सरस्वत्या मोक्षादिरूपसत्त्वावच्छिन्नकार्यप्रतीतेः। "सत्त्वाख्येनातिशुद्धेन गुणेनेंदुप्रभं दधौ" इति प्राधानिकरहस्ये। श्वेतरूपत्वात्साक्षात्सत्त्वयोगोक्तेश्च

न केवलं ब्रह्मरूपत्वनिर्णयः । अन्यैरपि तंत्रराजचिद्गगन-चंद्रिकामहार्थमंजर्य्याद्यनुसारिभिः-" कदाचिदाद्याललिता पुंरूपा कृष्णविग्रहा । विष्णुनादसमारंभादकरोद्विवशं जगत् ॥" इति । "न शिवेन विना शक्तिर्न शक्तिरहितः शिवः । तादात्म्यमनयोर्नित्यं वह्निदाहकयोरिव " इति । 'आलेख्यविशेषइव गजवृषभयोःप्रतिभासो यथा तथै-कस्मिन्नपि परमार्थे शिवशक्तिविभागकल्पनां कुर्मः'-इत्यादिवाक्यैरभेद एव भगवतीभगवतोः प्रतिपादितः।तथा च तयोरभिन्नत्वाद्भगवत्यग्रिमकीर्त्तनं न विरुद्धमिति॥ प्रकृतमनुसरामः—अहं देवीं वंदे । कीदृशीम्—दैत्येंद्रसूदनकरां दैत्यानामिंद्राः दैत्येंद्राः शुंभादयस्तेषां हननकरीमित्यर्थः । ननु "सूददीपदीक्षश्च" इत्यनेन सूदेर्युचं निषेधात्कथं दैत्येंद्रसूदनकरीमिति चेन्न, यथा 'मधुसूदन' इत्यत्र नन्द्यादिना निर्वाहस्तथात्रापि निर्वाहात् । पुनः कीदृशीम्—भजद्भ्यो भजनकर्तृभ्यो भगदां भगानि श्र्यादीनि ददाति भगदा "आतोऽनुपसर्गे" इति कः ताम्

"भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु—माहात्म्यै-श्वर्ययत्नेषु धर्मे मोक्षेऽथ ना रवौ" इतिकोशात् । पुनः कीदृशीम्—हर्य्यादिभिः सुरकुलैः परिवंद्यपादाम्, हर्य्या-दिभिर्विष्ण्वादिभिः सुरकुलैः देवसमूहैः परितः वन्द्यौ-पादावंघ्री यस्याः सा ताम् । "हारिश्चंद्रार्कवाताश्वशुक-भेकयमाहिषु । कपौ सिंहे हरेजैंशौ शक्रे लोकांतरे पुमान् ॥ वाच्यवर्तिंपगहारितोः" इति मेदिनी । "कुलं जनपदे गोत्रे सजातीयगणेऽपि च" इत्यपि तत्रैव । पुनः कीदृशीम्—प्रसन्नवदनां प्रसन्नं हृष्टं वदनं मुखं यस्याः सा ताम् । पुनः कीदृशीम्—भवनाशकर्त्रीं भवस्य जन्म-मरणादिरूपसंसारकारणीभूताज्ञानस्य नाशकर्त्रीम् । अत्रा-यमभिसंधिः—नन्वज्ञाननिवृत्तिः सती, उतासती, सद-सद्विलक्षणा वा । आद्ये आत्मभिन्ना, उताभिन्ना, भिन्ना-भिन्ना, भिन्नाभिन्नविलक्षणा वा । नाद्यः, द्वैतापत्तेः । न द्वितीयः, आत्मनोऽनादित्वेनाविद्यानिवृत्तेर्ज्ञानसाध्यत्वा-नुपपत्तेः । नापि तृतीयः, विरोधात् । अत एव न चतु-

र्थोऽपि, भिन्नाभिन्नव्यतिरेकेण प्रकारांतरासंभवात् । न च प्रथमद्वितीयः, असत्त्वे शशशृंगतुल्यायास्तस्याः साध्यत्वानुपपत्तेः पुरुषार्थत्वाभावप्रसंगाच्च । नापि तृतीयः, उक्तपक्षद्वयदूषणापत्तेश्च । न चतुर्थोऽपि, सदसद्विलक्षणत्वेऽनिर्वचनीयत्वेन तस्या अज्ञानावस्थानप्रसंगात्, अनिर्वचनीयाज्ञाननिवृत्तेरनिर्वचनीयत्वानुपपत्तेश्च । न हि घटनिवृत्तिर्घटो भवति । किंच भावरूपाज्ञानस्यानादित्वे निवृत्तिर्न संभवति, अनादिभावस्यात्मवन्निष्ठत्वनियमात् किंच जन्मादिकारणाज्ञानस्य निवृत्तिर्न संभवति, तस्या नध्यस्तत्वात्, स्वेनैव स्वस्याध्यासे आत्माश्रयात् अज्ञानांतरांगीकारेऽनवस्थापत्तेः, लोकेऽनध्यस्तस्य घटादेर्ज्ञानान्निवृत्त्यदर्शनात् । ततश्च सर्वथानुपपत्तेर्नाज्ञानस्य निवृत्तिः संभवतीति चेन्न, अज्ञाननिवृत्तेः आत्माभिन्नत्वांगीकारात्, अज्ञानस्य कल्पितत्वेन तत्प्रतियोगिकाभावस्यापि सत्त्वात्, कल्पितस्य चाधिष्ठानानतिरिक्तत्वात् । न चात्माभिन्नाया अज्ञाननिवृत्तेर्ज्ञानसाध्य

त्वानुपपत्तिरिति वाच्यम्, यस्मिन्सति यस्याग्रिमक्षण-संबंधः, असति यस्मिन् यस्याभावस्तत्साध्यमिति साध्यलक्षणस्य तत्र सत्त्वात् । नित्यसिद्धायामप्यज्ञाननिवृत्तौ साध्यत्वभ्रांत्या पुरुषप्रवृत्त्युपपत्तेश्च, "प्रपंचोपशमं शिवम्" इत्यादिश्रुत्या तस्यात्माभेदसिद्धेश्च । नाप्यनादिभावत्वेन तस्य निवृत्त्यनुपपत्तिः, अनादिभावस्यानिवृत्तिरिति सामान्यव्याप्तेः । 'ज्ञानेनाज्ञाननाशः' इत्यनुभवसिद्धविशेषव्याप्तिविरोधेन "तरति शोकमात्मवित्, भूयश्चांते विश्वमायानिवृत्तिः" इत्यादिश्रुत्या "ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः । मामेव ये प्रपद्यंते मायामेतां तरंति ते" इत्यादिस्मृत्या च अज्ञानव्यतिरिक्तस्थले संकोचस्यैवोचितत्वात् । तस्यास्माभिर्भावत्वानंगीकारात्, अभावविलक्षणत्वमात्रेण भावत्वव्यपदेशाच्च । नाप्यज्ञानस्य कल्पकाभावेनाकल्पिततयाऽज्ञाननिवृत्त्यसंभवो दीपादिवत्तस्य स्वपरनिर्वाहकत्वात्, तस्य स्वप्रकाशे आत्मनि वस्तुतो संभवेन

कल्पिततत्त्वस्यैव वक्तुमुचितत्वात्, "नासदासीन्नो सदा-
सीत" इत्यादिश्रुतेरिति। पुनः कीदृशीम्—विमानवरगां
विमानेषु वरो विमानवरस्तेन गच्छतीति विमानवरगा
ताम्। यद्वा—विगतं मानं येषां ते विमानास्तेषु वराः
श्रेष्ठास्तैर्गीयत इति विमानवरगा तां निरभिमाननर
गीयमानामिति भावः॥ ॥ श्रीमद्देवी देवानम्या दैत्य
हंत्री कल्याणंदा॥ भक्तेभ्यः सा पायादाद्या हीरासिं
राजानं तम्॥ ॥ १ ॥

ॐ श्रीगणेशाय नमः।

गणेशं गिरिजां शम्भुं गोविन्दं श्रीगुरूंस्तथा॥
नत्वा चित्तप्रसत्त्यर्थं क्रियते स्तवदीपिका॥ १ ॥

प्रभवंति यतोऽभिविशंति यतो भवतापहरं प्रणमामि गुरुम्॥
श्रुतिसूत्रकरं सुखदं प्रविभुं तमहं विमलं प्रभजामि सदा॥ २

शक्तिविशिष्टज्ञाने शक्तिज्ञानस्यावश्यकत्वेन शक्तिस्तुतिपूर्वकं नानकादी
दश गुरून् स्तौति **दैत्येन्द्र** इत्यादिना। अहं देवीं वन्दे। कीदृशीं देवीं
दैत्येन्द्रसूदनकरीम् दैत्यानामिन्द्राः दैत्येन्द्राः शुम्भादयस्तेषां हननकर्त्रीमित्य
र्थः। पुनः कीदृशीं भजद्भ्यो भगदाम्। भजद्भ्यः स्वभक्तेभ्यो भगदामैश्व

दात्रीम् "भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु ॥ माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षेऽथ ना रवौ ॥" इत्यभिधानात् । पुनः कीदृशीम् । हर्य्यादिभिः सुरकुलैः परिवंद्यपादाम्, हर्य्यादिभिः परितः वंद्यौ पादौ यस्याः सा ताम् । "हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ । चन्द्रे कोले प्लवंगे च यमे वाते च कीर्तितः ॥" इत्यभिधानात् । पुनः कीदृशीम् । प्रसन्नवदनाम्, प्रसन्नं वदनं यस्याः सा ताम्। पुनः कीदृशीम् । भवनाशकर्त्रीम्, भवस्य जन्ममरणादिरूपसंसारकारणीभूताज्ञानस्य नाशकर्त्रीम् । अत्रायमभिसंधिः—नन्वज्ञाननिवृत्तिः सती उतासती, सदसती वा, सदसद्विलक्षणा वा । पूर्वोक्तविकल्पार्थान्स्फोटयति—आत्मभिन्ना, उताभिन्ना, भिन्नाभिन्ना वा, भिन्नाभिन्नविलक्षणा वा । नाद्यः, द्वैतापत्तेः । न द्वितीयः, आत्मनोऽनादित्वेनाविद्यानिवृत्तेर्ज्ञानसाध्यात्वानुपपत्तेः । नापि तृतीयः, विरोधात् । अत एव न चतुर्थोऽपि, भिन्नाभिन्नव्यतिरेकेण प्रकारांतराभावात् । पुनः स्फुटार्थान्स्फोटयति । न च प्रथमद्वितीयौ,सत्त्वस्य सत्त्वे निवृत्तिर्न संभवति ब्रह्मणोऽपि निवृत्तिप्रसंगात् । असत्वे शशशृंगतुल्यायास्तस्याः साध्यत्वानुपपत्तेः पुरुषार्थत्वाभावप्रसंगाच्च । नापि तृतीयः, उक्तपक्षद्वयदूषणापत्तेश्च । न चतुर्थोऽपि, सदसद्विलक्षणत्वेऽनिर्वचनीयत्वेन तस्या अज्ञानावस्थानप्रसंगात्, अनिर्वचनीयाज्ञाननिवृत्तेरनिर्वचनीयत्वानुपपत्तेश्च । न हि घटनिवृत्तिर्घटो भवति । किंच, भावरूपाज्ञानस्यानादितो निवृत्तिर्न संभवति, अनादिभावस्यात्मवन्नित्यत्वनियमात् । किञ्च, जन्मादिकारणाज्ञानस्य निवृत्तिर्न संभवति, तस्यानध्यस्तत्वात्, स्वेनैव स्वस्या-

भ्यासे आत्माश्रयात्, अज्ञानांतरांगीकारेऽनवस्थापत्तेः। लोकेऽनध्यस्तस्य घटादेर्ज्ञानान्निवृत्त्यदर्शनात्। ततश्च सर्वथानुपपत्तेर्नाज्ञानस्य निवृत्ति संभवतीति चेन्न, अज्ञाननिवृत्तेरात्माभिन्नत्वांगीकारात्, अज्ञानस्य कल्पि तत्वेन तत्प्रतियोगिकाभावस्थापितत्वात्, कल्पितस्य चाधिष्ठानान तिरिक्तत्वात्। न चात्माभिन्नाया अज्ञाननिवृत्तेर्ज्ञानसाध्यत्वानुपपत्तिरिति वाच्यम्, यस्मिन्सति यस्याग्रिमलक्षणसंबंधः असति यस्मिन् यस्या भावस्तत्साध्यमिति साध्यलक्षणस्य तत्र सत्त्वात्, नित्यसिद्धायामप्यज्ञाननि वृत्तौ साध्यत्वभ्रांत्या पुरुषप्रवृत्त्युपपत्तेश्च प्रपंचोपशमं शिवमित्यादि श्रुत्या तस्यात्माभेदसिद्धेश्च। नाप्यनादिभावत्वेन तस्य निवृत्त्यनुपपत्तिः, अना दिभावस्यानिवृत्तिरिति सामान्यव्याप्तेः। ज्ञानेनाज्ञाननाश इत्यनुभव सिद्धविशेषव्याप्तिविरोधेन "तरति शोकमात्मवित्, भूयश्चांते विश्वमाया निवृत्तिः" इत्यादिश्रुत्या, "ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः। मामे ये प्रपद्यंते मायामेतां तरंति ते ॥" इत्यादिस्मृत्या च अज्ञानव्यतिरिक्त स्थले संकोचस्यैवोचितत्वात्, तस्यास्माभिर्भावत्वानंगीकारात्, अभाव विलक्षणत्वमात्रेण भावत्वव्यपदेशाच्च। नाप्यज्ञानस्य कल्पकाभावेनाकल्पि ततया ज्ञाननिवृत्त्यसंभवः, दीपादिवत्तस्य स्वपरनिर्वाहकत्वात्, तस्य स्वप्रकाशे आत्मनि वस्तुतोऽसंभवेन कल्पितत्वस्यैव वक्तुमुचितत्वाच्च "नासदासीन्नो सदासीत्" इत्यादिश्रुतेरिति। पुनः कीदृशीम्। विमानवर गाम्, विमानेषु वरो विमानवरस्तेन गच्छतीति विमानवरगा ताम्। वि पक्षिषु स्वामित्वेन मानः पूजा यस्य स विमानो गरुडः स चासौ वरश्रेष्ठ

इति विमानवरस्तेन गच्छतीति तथा 'वैष्णवी गरुडासना' इत्युक्तः । पुनः कीदृशीम् । कमनीयरूपाम्, कमनीयमत्युज्ज्वलं रूपं यस्याः सा ताम् ॥ १ ॥

श्रीनानकं गुरुवरं सकलाघहेतिं
हेतुं समस्तजगतां वरवेदिकेतुम् ॥
सेतुं भवात्मजलधेर्विदितात्मतत्त्वं
लोकेशवन्दितपदं सततं स्मरामि ॥ २ ॥

अहं श्रीनानकं सततं निरंतरं स्मरामि, श्रीश्च श्रीश्च श्रीश्च श्रियः शोभाविद्यालक्ष्म्यस्ताभिर्युतो नानकः श्रीनानकस्तम् । "श्रीर्वेषरचनाशोभाभारतीसरलद्रुमे लक्ष्म्यां त्रिवर्गसंपत्तिविद्योपकरणेषु च ॥ विभूतौ च मतौ च स्त्री" इति मेदिनी । न अनः प्राणो विद्यते यस्य स नानः, नानश्चासौ कश्चेति नानकः, कः सुखाकारः "अप्राणो ह्यमनाः शुभ्रः" इति श्रुतेः । 'अन्–प्राणने' अस्मादच् । यद्वा–न अनं चलमित्यचलं कं सुखं यस्मात्स नानकः । यद्वा–न अकं दुःखं पापं वा यस्य सोऽनकः । 'अकं दुःखे च पापे च' इति कोशः । नः प्रस्तुतश्चासावन-

कश्चेति नानकः। 'नः पुमान् सुगते बंधे द्विदण्डे प्रस्तुतेऽपि च' इति मेदिनी। यद्वा—ना पुरुषश्चासावनकश्चेति नानकः 'ना पुमान् गरिमा तथा' इत्येकाक्षरमाला। यद्वा—नो बंधः, न नो बंध इत्यनो मोक्षः, नश्चानश्च नानौ बंधमोक्षाविति यावत्, तौ करोतीति नानको विष्णुः स एवास्त्युपास्यत्वेन यस्य स नानकस्तम्। कथंभूतं श्रीनानकम्-गुरुवरम्, गृणंति हिताहितमुपदिशंतीति गुरवः 'गृ—शब्दे' 'कृग्रोरुच्च' इति कुः,उश्चांतादेशः। "गुरुर्महत्यांगिरसे पित्रादौ धर्मदेशिके। अलघौ दुर्जरे चापि' इति हैमः। गुरुषूपाध्यायादिषु ज्ञानप्रदत्वेन वरः श्रेष्ठस्तम्। "वरो जामातरि वृतौ देवतादेरभीप्सिते। पिंगे पुंसि त्रिषु श्रेष्ठे कुंकुमे तु नपुंसकम्" इति मेदिनी। "उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः। मातुलः श्वशुरश्चैव मातामहपितामहौ। वर्णज्येष्ठः पितृव्यश्च पुंसोऽत्र गुरवः स्मृताः॥" इति स्मृतेः। यद्वा-गुरुरेव वरो गुरुवरस्तम्। गुरुरत्र "गकारः सिद्धिदः प्रोक्तो रेफः

पापस्य दाहकः । उकारो विष्णुरव्यक्तस्त्रितयात्मा गुरुः परः ॥" इति ब्रह्मवैवर्तोक्तलक्षणकः । स एव वरस्तम् । पुनः कथंभूतम्—सकलाघहेतिं सकलपापशस्त्रभूतम् "रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः" इत्यमरः । ननु लक्षणप्रमाणाभ्यां वस्तुसिद्धेः स्मरणीयस्य श्रीनानकस्य किं लक्षणं किं तत्र प्रमाणमित्याशंक्य "यतो वा इमानि भूतानि" इत्यादिश्रुत्युक्तं जगत्कारणत्वम् । लक्षणमाह—हेतुं समस्तजगतामिति । समस्तजगतां हेतुं सकलजगदुपादानत्वे सति तत्कर्तृत्वमिति विवक्षितम् ततश्च परमाण्वादौ नातिव्याप्तिः । नन्विदमभिन्ननिमित्तोपादानत्वं कुत्राप्यप्रसिद्धं घटादिषु सर्वत्रोपादाननिमित्तयोर्भेदस्यैव दर्शनात् । ततः कथमप्रसिद्धलक्षणमुच्यते, प्रसिद्धस्यैव लोके लक्षणत्वदर्शनादिति चेदुच्यते—पृथिव्यप्तेजोवायवो विप्रतिपन्ना उत्पत्तिमंतः। पृथिवीत्वादेर्मृदुत्पन्नघटचन्द्रमःकांतोत्पन्नजलारण्युत्पन्नाग्निव्यजनपवनवदिति कार्यत्वमनुमायाकाशस्यापि भूत-

स्वहेतुना कार्य्यत्वानुमानांतरम् । पृथिव्यादीनि सदुपादानानि तदुपरक्ततया प्रतीयमानत्वात् । यन्नियमेन यदुपरक्ततया प्रतीयते तत्तदुपादानम् । यथा घटादि मृदाद्युपादानमिति लाघवात्सर्वस्य जगत एकसत्यकृतिकत्वस्य तत एवाभिन्ननिमित्तोपादानकत्वस्यापि सिद्धिः संभवति, परमते च घटेश्वरसंयोगादौ जीवात्मगतज्ञानादौ चाभिन्ननिमित्तोपादानत्वदर्शनात् । ततश्चानुमानसिद्धमभिन्ननिमित्तोपादानत्वमनूद्य तस्य ब्रह्मत्वबोधनं श्रुत्या संभवति, एवं च श्रुतेर्लक्षणपरत्वाभावेनानुमानसिद्धमभिन्ननिमित्तोपादानत्वमनूद्य तस्य ब्रह्मत्वबोधनमात्रेण न वाक्यभेदप्रसंगः । प्रमाणं च श्रीनानके—"शास्त्रयोनित्वात्" इत्युक्तन्यायेन सर्वे वेदांताः । ततश्च लक्षणप्रमाणयोः सत्त्वेन श्रीनानकस्य स्मरणं संघटत इति न किंचिदवद्यमिति भावः । पुनः कथंभूतम्—वरवेदिकेतं वेदिषु क्षत्रियविशेषेषु केतुरिवोच्चैस्तरत्वे वर्तमानो वेदिकेतुः वरश्चासौ वेदिकेतुः वरवेदिकेतु-

स्तम् 'केतुर्ग्रहपताकयोः' इति विश्वः। पुनः कीदृशम्—
भवात्मजलधेः सेतुम्, भवः संसारः स एव जलधिः दुस्त-
रत्वात्समुद्रस्तस्य सेतुं सेतुमिव तारकम् । पुनः कीदृशम्—
विदितात्मतत्त्वम्। केऽपि पामराश्चार्वाकविशेषाः—'गौ-
रोहं स्थूलोहं जानामीति स्थौल्यगौरताद्याधारे देह एव
ज्ञानसुखाहंतादिपरामर्शात्प्रत्यक्षविरुद्धेर्थे प्रमाणांतरावस-
रादनभ्युपगमाच्चोपचयापचयधर्मिणां स्थूलदेहमेवात्मा'
इतिवदंति।तदन्ये चार्वाकाः'काणोहं बधिरोहमद्राक्षमश्रौ-
षमिति काणत्वबधिरत्वादिधर्मिष्विन्द्रियेषु तथावमर्शादि-
न्द्रियाण्येवात्मा' इति वदंतीति। तेभ्योप्यन्ये 'सत्यपि देहे
स्थितशरीरे तादृशावमर्शादर्शनान्निद्रादिसमये लीनेष्वपीं-
द्रियेषु प्राणक्रियोपलब्ध्या जीवतीति व्यवहारदर्शनान्मू-
र्छते प्राणक्रियासंशये जीवसंशयाच्च प्राणानेवात्मानं
विदुरिति' इति । एभ्योप्यपरे—'सत्स्वपि देहेंद्रियप्राणे-
षु मनःप्रणिधानाप्रणिधानयोर्ज्ञानसुखादेरुदयानुदयव्यव-
हारदर्शनात्—''अन्यत्रमना अभूवं नादर्शमन्यत्रमना

अभूवं नाश्रौषम्"इति श्रुत्यापि तदनुवादान्मन एवात्मा इति वदंति । वैनाशिकास्तु-"पराभिमतमनसः सुषु विलयेऽपि जीवनदर्शनाद्बाह्यत्वाच्चेत्यसत्त्वाच्चात्मत्वायो गाच्चित्तचेत्योभयाकारपरिणामिनीं तदुभयविषयां क्षणि कां बुद्धिं विज्ञानमेवालयविज्ञानधाराभिधामात्मा" इ वदंति । भास्करादयस्तु-"आत्मनः क्षणिकत्वे प्रत्य भिज्ञानविरोधाद्बंधमोक्षोपपादनासंभवाच्छास्त्रवैफल्याप त्तेर्द्धाराया दुर्निरूपत्वाच्च नित्यां बुद्धिं विज्ञानमयको कर्तृत्वादिधर्मविशिष्टं मनसोप्यांतरमात्मा"इति गदंति सांख्यपातंजलास्तु-" सुखदुःखादीनामात्मधर्म आत्मनः सविकारत्वापत्तेरानिर्मोक्षानित्यत्वयोः प्रसंगा णपरिमाणरूपत्वमेव आत्मा त्वसंगोदासीनाचिन्मात्र पस्तस्य प्रकृतिगुणविवेकाद्भोक्तृत्वलक्षणो बंधः, विवे ज्ञानाच्च मोक्ष इति कल्पयंतो निःसुखामानंदरूपामहं रादिप्रकाशानुमेयां चितं ज्ञानमात्मा" इति वदं भाट्टाश्च-"कर्तृत्वादीनां प्राकृतत्वेऽन्यकृतेनान्यस्य

व्यवस्थानुपपत्तेः कृतहानादिप्रसंगाच्चात्मन एव कश्चिज्ज-डांशः कर्तृत्वसुखदुःखाद्याकारपरिणाम्यपरो बोधांश इति कल्पयंतो जडचित्स्वरूपमात्मानं कथयंति"। प्राभाकरनैयायिकादयस्तु—"आत्मनः सांशत्वे घटा-दिवदनित्यतां प्रसंजयंतो ज्ञानस्य गुणत्वं प्रकल्प्य समवा-येन ज्ञानविशिष्टं स्वतस्त्वाकाशादिवज्जडमात्मानं वदन्ति" इत्येते जगत्सत्यत्वनानात्म्यवादिनां पक्षाः। अद्वैतवा-दिनस्तु—"सत्यज्ञानसुखाद्वितीयमात्मानमाहुः"। इत्थं त्वंपदार्थे वादिनां विप्रतिपत्तिः। परिमाणादितद्धर्मेष्वपि तथा। यथा केचित्पाशुपतपांचरात्र्याद्यागमानुसारिणः आत्मनो विभुत्वे देहभोगादिव्यवस्थानुपपत्तिं मध्यम-परिमाणत्वे सावयवत्वानित्यत्वाद्यापत्तिं च मन्यमानास्त-मात्मानं परमाणुपरिमाणमाहुः॥ आर्हतादय "अणुत्वे सर्वशरीरव्यापिशैत्याद्यनुपलब्धिं प्रसंजयंतः शरीरसदृशं दीपप्रभावद्वत्संकोचविकासाभ्यां तत्तद्देहसमानपरिमाण-माचख्युः"। नैयायिकादयस्तथात्वेऽनित्यतामापादयंतो

वियदादिवद्विभुं परममहापरिमाणमाहुरिति परिमाणे विप्रतिपत्तिः ग्राहकविषयेऽपि सा यथैते त्रयो वादिनस्तमात्मानं मनःकरणकप्रत्यक्षस्य विषयमाहुः। सांख्यादयो नित्यानुमेयं कदाप्यपरोक्ष्यरहितं सत्त्वगुणप्रधानबुद्धिवृत्तिप्रतिफलनाधीनविषयप्रथानुमेयं जगुः। वैनाशिकास्तु—स्वलक्षणक्षणिकविज्ञानप्रकाश्यमाहुः। प्राभाकराः—सर्वज्ञानप्रकाश्यं सर्वस्मिन्नपि ज्ञाने आत्मा ज्ञानं विषय इति त्रिपुटी भासते विषयः कर्मतया आत्म आश्रयतया ज्ञानं तु स्वप्रकाशमेव सर्वमपि ज्ञानमाश्रयांशे स्वांशे चापरोक्षमेव विषयांशे त्वनुमित्यादिनानारूपमिति प्राहुः। औपनिषदाश्च—परमं भासकत्वेन प्रसिद्धसूर्यचंद्राग्निकरणेभ्योप्युत्कृष्टं स्वयमेव द्योतं नान्यापेक्षं स्फुरणैकस्वरूपत्वादन्नमयादिकोशपञ्चकविवेके आनंदमयकोशादप्याभ्यंतरं परमप्रेमास्पदस्फुरणैकरस्येन परिशिष्यमाणं वस्त्वात्मेति जगुरिति। इत्थमेव तत्पदार्थेऽपि विवादिनां विप्रतिपत्तयः—यथ

केपि कापिलाः—सत्त्वरजस्तमोगुणानां साम्याव-स्थालक्षणां महदादिमहाभूतांतत्रयोविंशतितत्त्वात्मक-विकारपरिणामिनीं प्रधानाख्यां मूलप्रकृतिं जगत उपा-दानम् अभिदधुः। वैनाशिकविशेषा आर्हताश्च-पृथिव्यादिभूतचतुष्टयपरमाणूनविद्यादिनिमित्तचक्रपरिव-र्त्तनाच्छरीराद्याकारेण बाह्यविषयाकारेण च संहन्य-मानांस्तथाभिदधुः। पातंजलास्तु—ईश्वराधिष्ठितां प्रकृतिं कारणमाहुः। कणादगौतमीयास्तु—ईश्वराष्ठिता-न्परमाणून्कारणान्याहुः। विज्ञानवादिनः—नश्वरं क्षणिकं ज्ञानं विज्ञानमेवासद्बाह्याकारेण परिणमनं तथेत्यभिदधुः। माध्यमिकास्तु—क्षणिकविज्ञानमपि पूर्वापरकालास्पर्शिवर्तमानक्षणेप्यसदेवेति मन्यमानाः शून्यमलीकमेव सावृत्तजगदारोपाधिकरणं तथाभिदधुः। हैरण्यगर्भाश्च-विरिंचिं तथाभिदधुः। लोकायतिकास्तु स्वभावं बीजादिस्वरूपमेवांकुरादिजननसमर्थमन्वयव्य-

तिरेकाभ्यां दृष्टमिति बीजादेरंकुराद्युत्पादकत्वमग्न्यौष्ण्यवत्स्वभाव एव, क्षित्यादीनां तु चतुर्णां परिणामिस्वभावानां यथा दर्शनं स्थैर्य्यमेवेति, न कर्त्रपेक्षेत्युक्तवंतः। कालवादिनो मौहूर्तिकास्तु-तदार्त्तवफलपुष्पादीनां कालांतरे जन्मादर्शनात्कालमेव तथाहुः। अनीश्वरवादिनः-यदृच्छामाकस्मिकत्वापरपर्य्यायामतर्क्यहेतुकतामभिदधुः। कर्ममीमांसकाश्च-कर्मविहितनिषिद्धाचरणाजन्यं जीवादृष्टमेव तथेत्याहुः। औपनिषदाश्च गुणत्रयवत्या सकलकार्यवासनासंभृतया अनिर्वचनीययानंतशक्त्या मायया तादात्म्यात् शबलं नानावर्णमिव सर्वज्ञं सर्वशक्तिसंपन्नं वस्तुतः सच्चिदानंदाद्वयप्रत्यग्रूपं ब्रह्मैव केशलोमादेर्जीवत्पुरुषशरीरमिव भुजगादे रज्वादिस्वरूपमिव चाभिन्ननिमित्तोपादानकारणमित्यभिदधुः, तस्मादित्थं विवेचनेन विदितं ज्ञातमात्मनोस्तत्त्वं पदार्थयोस्तत्त्वं स्वरूपं येन स तम्। पुनः कीदृशम्-लोकेशवंदितपदम्, लोकानां जनानामीशाः

लोकेशास्तैर्वंदितं नमस्कृतं पदमंघ्रिः स्थानं वा यस्य स लोकेशवंदितपदस्तम् । "पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु" इत्यमरः । अत्रानुप्रासोऽलंकारः।तल्लक्षणं तु—"तुल्यश्रुत्यक्षरावृत्तिरनुप्रासः स्फुरद्गुणः । अत्पदः स्याच्छेकानां लाटानां तत्पदश्च सः"इति॥ समस्तलोकहेतुको गुरुः प्रभुः सुवंदितः। भवाब्धिपारदर्शको वारिष्ठवेदिकेतुकः ॥ सविश्वपापशस्त्रभूतनानको मुनिः सदा। प्रयातु हीरसिंहकं नराधिनाथमात्मवित् ॥ २ ॥

अहं श्रीनानकं स्मरामि। न अनः प्राणो विद्यते यस्य स नानो नाकारादिरयम्, नानश्चासौ कश्चेति नानकः, कः सुखाकारः"अप्राणो ह्यमनाः शुभ्र" इति श्रुतेः । अन् प्राणनेऽस्मादच् । यद्वा—न अनं चलमित्यचलम् अचलं कं सुखं यस्मात्स नानकः। यद्वा - न अकं दुःखं यस्य सोऽनकः नः प्रस्तुतश्चासावनकश्चेति नानकः 'नः पुमान्सुगते बंधे द्विरण्डे प्रस्तुतेऽपि च' इति मेदिनी । यद्वा—नो पुरुषश्चासावनकश्चेति नानकः । 'ना पुमान् गरिमा तथा' इत्यनेकाक्षरमाला । यद्वा—नो बंधः, न नो बंध इत्यनो मोक्षः, नश्चानश्च नानौ बंधमोक्षाविति यावत्, तौ करोतीति नानकस्तम् । श्रीश्च श्रीश्च श्रीश्च श्रियः, ताभिः शोभाविद्यालक्ष्मीभिर्युतो नानकः श्रीनानकस्तम् । न अकं दुःखं विद्यते यस्य सोऽनकः, ना पुरुषश्चास

अनकश्चेति नानकस्तम्, 'ना पुमान् गरिमा तथा' इति अनेकाक्षरमाला। कथं भूतं श्रीनानकं गुरुवरम् गुरुषु उपाध्यायादिषु ज्ञानप्रदत्वेन वरो गुरुवरस्तम्। "उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः। मातुलः श्वशुरश्चैव मातामह-पितामहौ॥ वर्णज्येष्ठः पितृव्यश्च पुंसोऽत्र गुरवः स्मृताः॥" इति स्मृतेः। पुनः कथंभूतं सकलाघहेतिं सकलपापशस्त्रभूतम्। "रवेरर्चिश्च शस्त्रञ्च वह्निज्वाला च हेतयः॥" इत्यमरः। ननु लक्षणप्रमाणाभ्यां वस्तु-सिद्धेः स्मरणीयस्य श्रीनानकस्य किं लक्षणं किं वा प्रमाणमित्याशंक्य "यतो वा इमानि भूतानि" इत्यादिश्रुत्युक्तम् जगत्कारणत्वं लक्षणमाह-हेतुं समस्तजगतामिति। समस्तजगतां हेतुं सकलजगदुपादानत्वे सति तत्कर्तृत्वमिति विवक्षितम्। ततश्च परमाण्वादौ नातिव्याप्तिः॥ नन्वि-दमभिन्ननिमित्तोपादानत्वं कुत्राप्यप्रसिद्धम्, घटादिषु सर्वत्रोपादाननिमित्तयो-र्भेदस्यैव दर्शनात्, ततः कथमप्रसिद्धं लक्षणमुच्यते, प्रसिद्धस्यैव लोके लक्ष-णत्वदर्शनादितिचे दुच्यते-पृथिव्यप्तेजोवायवो विप्रतिपन्ना उत्पत्तिमंतः। पृथिवीत्वादेर्मृदुत्पन्नघटचन्द्रकांतोत्पन्नजलारण्युत्पन्नाग्निव्यजनोत्पन्नपवनव-दिति कार्यत्वमनुमाय आकाशस्यापि भूतत्वहेतुना कार्यत्वानुमानान्त-पृथिव्यादीनि सदुपादानकानि तदुपरक्ततया प्रतीयमानत्वात् यन्नियमे-यदुपरक्ततया प्रतीयते तत्तदुपादानम्। यथा-घटादि मृदाद्युपादानकमिति लाघवात्, सर्वस्य जगत एकसत्यकृतिकत्वस्य विश्वस्य जगतः कर्तृ-तत्त्वेन तत एवाभिन्ननिमित्तोपादानकत्वस्यापि सिद्धिः संभवति। परमे-च घटेश्वरसंयोगादौ जीवात्मगतज्ञानादौ चाभिन्ननिमित्तोपादानत्वदर्श-

नात् । ततश्चानुमानसिद्धमभिन्ननिमित्तोपादानत्वमनूद्य तस्य ब्रह्मत्वबोधनं श्रुत्वा संभवति। एवं च, श्रुतेर्लक्षणपरत्वसद्भावेऽप्यनुमानसिद्धमभिन्ननिमित्तोपादानत्वमनूद्य तस्य ब्रह्मत्वबोधनमात्रेण न वाक्यभेदप्रसंगः प्रमाणं च श्रीनानकस्य शास्त्रयोनित्वादित्युक्तन्यायेन सर्वे वेदान्ताः। ततश्च लक्षणप्रमाणयोः सत्त्वेन श्रीनानकस्य स्मरणं संघटते इति न किंचिदवद्यमिति भावः। पुनः किंविशिष्टं वरवेदिकेतुं वेदिषु केतुरिवोच्चैस्तरत्वेन वर्त्तमानः वेदिकेतुः वरश्चासौ वेदिकेतुश्च वरवेदिकेतुस्तम् "केतुर्ग्रहपताकयोः" इति विश्वः। पुनः कीदृशं भवात्मजलधेः सेतुम्, भवो जन्म तदेव जलधिः समुद्रः तस्य सेतुरिव सेतुस्तारकस्तम् । पुनः कथंभूतं विदितात्मतत्त्वं विदितं स्वस्वरूपभूतात्मतत्त्वं येन स तम्। पुनः कथंभूतं लोकेशवंदितपदं लोकानामीशाः लोकेशाः तैः वंदितं पदं यस्य स लोकेशवंदितपदस्तम् ॥ २ ॥

**श्रीनानकस्य दयितं विदितं च लोकै-**
**र्वेदैः प्रगीतमहिमानमनेकवाक्यैः ॥**
**शुद्धं प्रबुद्धमजितं गतभावमर्त्यैः**
**श्रीयुक्तमंगदगुरुं प्रभजेनिशं तम् ॥ ३ ॥**

अहमंगदगुरुमनिशं निरवच्छिन्नं यथा स्यात्तथा प्रभजे प्रकर्षेण कायवाङ्मनोभिः सेवे, अंगं

गात्रं हरिप्राप्त्युपायं वा ज्ञानं वा ददातीत्यंगदः "अंगं गात्रे प्रतीकोपाययोः" इति मेदिनी । अंगदश्चासौ गुरुश्चेत्यंगदगुरुस्तम् । कथंभूतम्—श्रीनानकस्य दयितं प्रेमास्पदम् । पुनः किंभूतम्—विदितं सर्वत्रोपलभ्यमानं विदितमिति 'विद–ज्ञाने' अस्मात् क्तप्रत्यये इटि च सिद्धम् । न च "विभाषा गमहनविदविशाम्" इत्यनेन विकल्पेनेड्विधानान्निष्ठायां "यस्य विभाषा" इतीट्प्रतिषेधात् कथमिडिति वाच्यम्, 'आदितश्च' इति योगविभागेन यदर्थकस्य विभाषा तदर्थकस्य प्रतिषेधः इति ज्ञापितत्वात्, ततश्च तत्र विशिना तौदादिकेन साहचर्य्याल्लाभार्थविदेर्ग्रहणात् ज्ञानार्थकस्य "यस्य विभाषा" इति प्रतिषेधाभावः । न च हना आदादिकेन साहचर्य्याददादिकज्ञानार्थकस्यैव ग्रहणमिति वाच्यं, विनिगमनाविरहात् । न च शब्दपरविप्रतिषेध एव नियामक इति वाच्यम्, अस्यासार्वत्रिकत्वात् । वस्तुतस्तु 'कृती- छेदने' इत्यस्येदित्करणाल्लिंगात् "यस्य विभाषा" इत्यनित्यत्वे

निषेधाभावो बोध्यः । यद्ययं विधिर्नित्यः स्यात् "से सिचि" इत्यनेन विभाषितेट्त्वादनेनैव निषेधस्य सिद्धत्वादिदित्करणमप्यपार्थकं स्यादिति दिक् । पुनः किंभूतम्—लोकैर्वेदैश्चानेकवाक्यैः प्रगीतमहिमानं लौकिकवैदिकैरनेकवाक्यैः प्रगीतो महिमा प्रभावो यस्य स प्रगीतमहिमा तम् । पुनः किंभूतम्—शुद्धं कामादिमलशून्यम् । पुनः कीदृशम्—प्रबुद्धं स्वस्वरूपभूतप्रकाशेन प्रकाशितं ज्ञानस्वरूपत्वात्तस्य ज्ञानस्य च स्वप्रकाशत्वादिति भावः । ननु स्वप्रकाशत्वं ज्ञानस्येत्यनुपपन्नमिदं क्रियाकर्मभावस्य भेदव्यतिरेकेणानुपपत्तेः । न च क्रियाकर्मभावस्य को विरोध इति वाच्यम्, कार्या हि कर्मणो भवति कर्मकारकं क्रियायाः । न च स्वेनैव स्वनिष्पादनं शक्यम्, पूर्वापरभावविशेषस्य हेतुमद्भावरूपत्वात् । न च तस्मादेव तदेव पूर्वमपरं च संभवति तदनवच्छिन्नकालविशेषस्य तत्पूर्वशब्दार्थत्वात् । मैवम्, क्रियायाः कर्मजन्यत्वास्वीकारात् भाविव्यक्ति-

विषयकज्ञानेच्छादौ व्यभिचारेणास्य नियतपूर्ववर्तित्वाभावात् । न च यद्येवं तर्हि पाणिनेः कारकमध्ये कर्मपरिगणनं किंनिबंधनमिति वाच्यम्, आत्मानं जानामीत्यादौ कर्मणः क्रियाजनकत्वमादाय कर्मणि कारकत्वव्यपदेशात् । किंच, तत्कर्मत्वं यत्स्वं प्रति विरुध्यते परसमवेतक्रियाफलभागित्वमिति चेन्न, वृक्षात्पर्णं पततीत्यत्र वृक्षस्यापादानस्य पर्णगतपतनक्रियाया यत्फलं विभागः तच्छालिनः कर्मत्वापत्तेः । न चेष्टापत्तिः, अपादानस्य कर्मत्वे "कर्मणि द्वितीया" इत्यनुशासनबलात् वृक्षं पर्णं पततीत्यपि प्रयोगापत्तेः, 'विवक्षातः कारकाणि भवंति' इति तदविवक्षायां नैवमिति चेन्न, यदि वास्तवं कर्मत्वं तत्रांगीक्रियते तदा विवक्षायाः प्रयोक्तृमात्रतंत्रत्वेन कदाचित्कर्मत्वविवक्षया प्रयोगापत्तेरपादानस्य कर्मत्वं न विवक्षितमिति शाब्दिकसंप्रदाय इति चेत्तर्हि तत्र निवृत्तसर्वकर्मव्यवहारेपि स्वकृतकर्मलक्षणानुरोधेन कर्मत्वमभ्युपग

च्छता वस्तुमात्रं कर्म इत्याद्यपि लक्षणं सावकाशितं स्यात्, कथं च निवृत्तसर्वकर्मव्यवहारेऽपि कर्मत्वमस्तीत्यधिगतं लोकोत्तरप्रज्ञेन अपादानभिन्नपरसमवेतक्रियाफलभागित्वं कर्मत्वमिति चेन्न, तत्रापि नदी वर्द्धते इत्यादौ तद्वृद्धेरप्राप्ततीरभागादिप्राप्तिफलायाः सकर्मकत्वापत्तेः क्रियानाशकपरसमवेतक्रियाफलाभागित्वमिति चेन्न, तत्रापि तीरनीरसंयोगस्य क्रियानाशकत्वात्, वृक्षपर्णविभागस्य क्रियानाशकत्वाभावेन वृक्षं त्यजतीत्यादावकर्मकत्वप्रसंगाच्चात्मनःकर्मभिन्नत्वाभावेनात्मानं जानामीत्यत्राव्याप्तेः योग्यविशेषगुणोपहितस्यात्मनः कर्मत्वं केवलस्यैव तद्भिन्नत्वात्परत्वमिति विशिष्टाविशिष्टभेदेन प्रकृतेऽपि लक्षणसत्त्वान्नाव्याप्तिरिति चेन्न, यतोऽध्यात्मविदो निरुपाधिमात्मानं जानंतो ज्ञानं नात्मकर्मकं स्यात्, ईश्वरज्ञानस्य विश्वं कर्म। न च साक्षात्क्रियाफलनाश्यानित्यत्वादिति तत्राव्याप्तेः। करणव्यापारविषयः कर्मेति चेन्न, हस्तेन रामेण शरेणेत्यादावतिप्रसंगात्,

तस्माद्व्याकरणकारैः शब्दसिद्ध्यर्थं नदीवृद्ध्यादिव-त्कर्मापि पारिभाषितमित्यलं तदनुगमलक्षणगवेषणया। न च धात्वर्थतावच्छेदकपरसमवेतक्रियाफलभागित्वं कर्मत्वम्, तेन गमनस्योत्तरसंयोगो धात्वर्थतावच्छेदक-स्तद्भागिग्रामादिकर्मपतनस्याधःसंयोगः फलं न तु विभागः। तेन तद्भागिनोऽपादानस्य न कर्मत्वम्। त्यजेश्च पूर्वदेशविभाग एव धात्वर्थतावच्छेदक इति तद्भागिनो वृक्षस्य कर्मत्वं वृक्षं पर्णं त्यजतीति भवत्येव। वृद्धेरव-यवोपचयस्य नावच्छेदकं तादृशं फलं येन तद्भागितया तीरादेः कर्मत्वं स्यादिति वाच्यम्, ज्ञाततादेर्विकल्पा-सहत्वेन क्रियाफलत्वाभावात्, ज्ञानादिक्रियाया अकर्म-कत्वापत्तेः। ननु चाभेदे विषयविषयिभावस्यैवासंगतत्वम्, विषयित्वं हि विषयसंबंधिता,संबंधश्च भेदमंतरेणासंभवद-वस्थितिसंबंधमितेःसंबंधिस्वरूपभेदमिति व्यतिरेके वैपरी-त्यावधारणात्। मैवम्, विषयविषयिभावोहि संबंधो न संबंधिस्वरूपाद्भिन्नः तथाभूतत्वेपि चांततस्तत्संबंध-

स्यापि स्वाश्रयात्मकत्वमभ्युपगंतव्यमनवस्थाभयात् । न च संबंधांतरापेक्षया कथमिदं वैषम्यमिति वाच्यम्, स्वभावसंबंधस्येतरसंबंधमर्यादिशायित्वात् । अथवा स्वात्मना सह क्रियाकर्मभावो वा विषयविषयिभावो वा स्वप्रकाशार्थं इति नाभ्युपेयमेव, यथा नु भवतां सतां संबंधादितरत्र सद्व्यवहारव्यवस्था, सत्ता तु स्वयमेव सद्रूपा । न च तावता स्वात्माश्रयता तस्याः तथा ज्ञानमपि स्वत एव सिद्धस्वरूपमिति । पुनः किंभूतम्—गतभावमर्त्यैरजितम्,गतो भावः प्रीतिर्येषां तैरजितमवशीकृतमित्यर्थः । "भावः प्रीतिस्तथा सत्ता पदार्थो भाव इष्यते" इत्यनेकार्थध्वनिमंजर्याम् ॥ ॥ शुचिः प्रबुद्धो गुरुरंगदोऽनिशं सुपर्वगीतो विदितो जनैरलम् । स नानकात्माजितमाशु नास्तिकैः श्रिया युतो हीरकसिंहमावतु ॥ ॥ ३ ॥

अहं तं श्रीयुक्तमंगदगुरुम् अनिशं निरवच्छिन्नं यथा स्यात्तथा प्रभजे अङ्गं ज्ञानोपाये ददातीत्यंगदः अङ्गदश्चासौ गुरुश्चेत्यंगदगुरुस्तम् । कथंभूतं श्रीनानकस्य दयितं प्रेमास्पदम् । पुनः कथंभूतं विदितं सर्वत्रोपलभ्य-

मानम्, विदित इति विदज्ञानेऽस्मात् क्त प्रत्यये इटि च सिद्धम् । न च "विभाषा गमहनविदविशाम्" इत्यनेन विकल्पेनेड्विधानान्निष्ठायां "यस्य-विभाषा" इट्प्रतिषेधात् कथमिडिति वाच्यम, "आदितश्च" इति योगविभागेन यदर्थकस्य विभाषा तदर्थकस्य प्रतिषेध इति ज्ञापितत्वात्। ततश्च तत्र विशिना तौदादिकेन साहचर्याल्लाभार्थविदेर्ग्रहणात् । ज्ञानार्थकस्य "यस्य विभाषा" इति प्रतिषेधाभावः। न च हना आदादिकेन साहचर्यादादादिकज्ञानार्थस्यैव ग्रहणमिति वाच्यम् । विनिगमनाविरहात्, न च नशब्दः परविप्रतिषेध एव नियामक इति वाच्यम् । अस्यासार्वत्रिकत्वात्, वस्तुतस्तु 'कृती—छेदने' इत्यस्येदित्करणलिङ्गाद्यस्य विभाषेत्यनित्यत्वेन निषेधाभावो बोध्यः। यद्ययं विधिर्नित्यः स्यात् 'से सिचि' इत्यनेन विभाषितेट्त्वादनेनैव निषेधस्य सिद्धत्वादिदित्करणमपार्थकं स्यादिति मार्गः । पुनः कथंभूतं लोकैर्वेदैश्चानेकवाक्यैः प्रगीतमहिमानं लौकिकवैदिकैः अनेकवाक्यैः प्रगीतो महिमा प्रभावो यस्य स प्रगीतमहिमा तम् । पुनः कथंभूतं शुद्धं कामादिमलशून्यम । पुनः कीदृशं प्रबुद्धम्—स्वस्वरूपभूतप्रकाशेन प्रकाशितं ज्ञानस्वरूपत्वात्तस्य ज्ञानस्य च स्वप्रकाशत्वादिति भावः। ननु स्वप्रकाशत्वं ज्ञानस्येत्यनुपपन्नमिदं क्रियाकर्मभावस्य भेदव्यतिरेकेणानुपपत्तेः । न च क्रियाकर्मभावस्य को विरोध इति वाच्यम्, कार्यादि क्रिया कर्मणो भवति, कर्म कारकं क्रियायाः । न च स्वेनैव स्वनिष्पादनं शक्यम्, पूर्वापरभावविशेषस्य हेतुमद्भावरूपत्वात् । न च तस्मादेव तदेव पूर्वमपरञ्च संभवति, तदनवच्छिन्नकालविशेषस्य तत्पूर्वशब्दार्थत्वात् ।

मैवं क्रियायाः कर्मजन्यत्वास्वीकारात्, भाविव्यक्तिविषयकज्ञानेच्छादौ व्यभिचारेणास्य नियतपूर्ववर्त्तित्वाभावात्। न च यद्येवं तर्हि पाणिनेः कारकमध्ये कर्मपरिगणनं किंनिबंधनमिति वाच्यम्, आत्मानं जानामीत्यादौ कर्मणः क्रियाजनकत्वमादाय कर्मणि कारकत्वव्यपदेशात्। किं च तत्कर्मत्वं यत्स्वं प्रति विरुद्ध्यते परसमवेतक्रियाफलभागित्वमिति चेन्न, वृक्षात्पर्णं पततीत्यत्र वृक्षस्यापादानस्य पर्णगतपतनक्रियाया यत्फलं विभागः तच्छालिनः कर्मत्वापत्तेः। न चेष्टापत्तिः, अपादानस्य कर्मत्वे "कर्मणि द्वितीया" इत्यनुशासनबलात् वृक्षं पर्णं पततीत्यपि प्रयोगापत्तेः। विवक्षातः कारकाणि भवंतीति तदविवक्षायां नैवमिति चेन्न, यदि वास्तवं कर्मत्वं तत्रांगीक्रियते तदा विवक्षायाः प्रयोक्तृमात्रतंत्रत्वेन कदाचित्कर्मत्वविवक्षया प्रयोगापत्तेः। अपादानस्य कर्मत्वं न विवक्षितमिति शाब्दिकसंप्रदाय इति चेत्तर्हि, तत्र निवृत्तसर्वकर्मव्यवहारेपि स्वकृतकर्मलक्षणानुरोधेन कर्मत्वमभ्युपगच्छता वस्तुमात्रं कर्मेत्याद्यपि लक्षणं सावकाशितं स्यात्, कथं च निवृत्तसर्वकर्मव्यवहारेपि कर्मत्वमस्तीत्यधिगतं लोकोत्तरप्रज्ञेन अपादानभिन्नपरसमवेतक्रियाफलभागित्वे कर्मत्वमिति चेन्न, तत्रापि नदी वर्द्धते इत्यादौ तद्वृद्धेरप्राप्ततीरभागादिप्राप्तिफलायाः सकर्मकत्वापत्तेः, क्रियानाशकपरसमवेतक्रियाफलाभागित्वं कर्मत्वमिति चेन्न तत्रापि तीरनीरसंयोगस्य क्रियानाशकत्वात्, वृक्षपर्णविभागस्य क्रियानाशकत्वाभावेन वृक्षं त्यजतीत्यादावकर्मकत्वप्रसंगाच्च, आत्मनः कर्मभिन्नत्वाभावेन आत्मानं जानामीत्यत्राव्याप्तेः, योग्यविशेषगुणोपहितस्यात्मनः

कर्मत्वं केवलस्यैव तद्भिन्नत्वात्परत्वमिति विशिष्टाविशिष्टभेदेन प्रकृती लक्षणसत्वान्नाव्याप्तिरिति चेन्न, यतोध्यात्मविदो निरुपाधिमात्मानं जानतो ज्ञानं नात्मकर्मकं स्यात्, ईश्वरज्ञानस्य विश्वं कर्म। न च साक्षातक्रिया फलनाश्यानित्यत्वादिति तत्राव्याप्तेः करणव्यापारविषयः कर्मेति चेन्न, हस्तेन रामेण शरेणेत्यादावतिप्रसंगात्, तस्माद्व्याकरणकारैः शब्द सिद्ध्यर्थे नदीवृद्ध्यादिवत्कर्मापि पारिभाषितमित्यलं तदनुगमलक्षणगवे णया। न च धात्वर्थतावच्छेदकपरसमवेतक्रियाफलभागित्वं कर्मत्वं, त गमनस्योत्तरसंयोगो धात्वर्थतावच्छेदकस्तद्भागिग्रामादिः कर्म पतनस्याध संयोगः फलं न तु विभागः, तेन तद्भागिनोपादानस्य न कर्मत्वं, त्यजे पूर्वदेशविभाग एव धात्वर्थतावच्छेदक इति तद्भागिनो वृक्षस्य कर्मत्वं वृक्षं पर्णं त्यजतीति भवत्येव, वृद्धेरवयवोपचयस्य नावच्छेदकं ताद फलं येन तद्भागितया तीरादेः कर्मत्वं स्यादिति वाच्यम्, ज्ञाततादेर्विकल सहत्वेन क्रियाफलत्वाभावात्, ज्ञानादिक्रियाया अकर्मकत्वापत्तेः। न चाभेदे विषयविषयिभावस्यैवासंगतत्वं, विषयित्वं हि विषयसंबंधितासंबंध भेदमंतरेणासंभवदवस्थितिसंबंधमितेः संबंधिस्वरूपभेदमिति व्यतिरेके वै रीत्यावधारणात् मैवं, विषयविषयिभावो हि संबंधो न संबंधिस्वरूपाद्भिन्न तथाभूतत्वेपि चांततस्तत्संबंधस्यापि स्वाश्रयात्मकत्वमभ्युपगंतव्यमनवस्था भयात्। न च संबंधांतरापेक्षया कथमिदं वैषम्यमिति वाच्यम्, स्वभा संबंधस्येतरसंबंधमर्यादादिशायित्वात्। अथ वा स्वात्मना सह क्रिय कर्मभावो वा, विषयविषयिभावो वा स्वप्रकाशार्थ इति नाभ्युपेयमेव, यथ

तु भवतां सतां संबंधादितरत्र सद्व्यवहारव्यवस्था मता तु स्वयमेव सद्रूपा न च तावता स्वात्माश्रयता तस्याः, तथा ज्ञानमपि स्वत एव सिद्ध-स्वरूपमिति । पुनः कथंभूतं गतभावमर्त्यैरजितम्, गतो भावो प्रीतिर्येषां तैः अजितम् अवशीकृतम् ॥ ३ ॥

श्रीनानकाब्जचरणाब्जकफर्फरीकं
कामस्य मोहकृतये कृतवर्वरीकम् ॥
ईशोत्सवाय समये धृतदर्दरीकं
नित्यं भजाम्यमरदासमलीकतर्कम् ॥ ४ ॥

अहममरदासं न म्रियत इत्यमरो विष्णुः । पचाद्यच् । 'अमृत्युः सर्वदृक्' इति स्मरणात् । तस्य दासः भृत्यस्तम् । यद्वा—"अः कृष्णः शंकरो ब्रह्मा शक्रः सोमोऽनिलोनलः । सूर्यः प्राणो जनः कालो वसंतः भणतः सुखी" इति । "मः स्तोमः सोमो रामो रणो गजः" इत्येकाक्षरमाला ।"मो यमे संयमेऽपि स्याद्विषे च मधु-सूदने । मा स्त्री पद्मालयायां च पुँल्लिंगश्चन्द्रशेखरः ॥" इति मेदिनी । "रः कामो वह्निः सूर्योऽथ तोयधिः" इत्येकाक्षरमाला । "दः पुमानचले दंते स्त्रियां शोभनदानयोः।

छेदोपतापरक्षासु पुमांस्तु दातारि स्मृतः ॥" इति मेदिनी । इत्यादिवाक्यात् । अश्च मश्च रश्च दश्च ते अमरदाः, आस्यतेऽस्मिन्नित्यासोऽधिष्ठानम्, अमरदानामासोऽमरदासः । सकलाधिष्ठानं ब्रह्म तमिति । यद्वा—अमरेति भावप्रधानो निर्देशः, तथा चामरत्वं दासतीत्यमरदासस्तम् 'दासृ दाने' अस्मादण् । नित्यमनवरतं भजामि सेवे । कीदृशम्—अलीकतर्कम् । अलीकं दिव्यं तर्क ऊहो यस्य स तम् "अलीकमप्रियेऽपि स्याद्दिव्ये सत्ये नपुंसकम् ।" इति मेदिनी । "तर्कः कांक्षावितर्के हि हेतुशास्त्रेषु कथ्यते ।" इति मेदिनी । यद्वा—अलीकस्य भालस्य तर्को विचारो तस्य स तम् । "अलीकमप्रिये भाले" इति हैमः । "ते दृष्टिमात्रपतिता अपि कस्य नात्र क्षोभाय पक्ष्मलदृशामलकाः खलाश्च ॥ नीचाः सदैव सविलासमलीकलग्ना ये कालतां कुटिलतां च न संत्यजंति ॥" इति नाप्रयुक्ताख्यदोषावकाशः, विधिलिखितभालाक्षरमालिकावाचने समर्थ

इति भावः। यद्वा—अलीकं मिथ्याभूतः तर्कः प्रपंचो यस्मिन् स तम्। "अलीकं त्वप्रियेऽनृते" इत्यभिधानात्। ननु किमिदं प्रपंचस्य मिथ्यात्वं प्रमाणागम्यत्वम्? १, अप्रमाणज्ञानगम्यत्वम्? २, अयथार्थज्ञानगम्यत्वम्? ३, सद्विलक्षणत्वम्? ४, सदसद्विलक्षणत्वम्? ५, अविद्यातत्कार्ययोरन्यतरत्वम्? ६, ज्ञाननिवर्त्यत्वम्? ७, प्रतिपन्नोपाधौ निषेधप्रतियोगित्वम्? ८, बाध्यत्वम्? ९, स्वात्यंताभावसमानाधिकरणतया प्रतीयमानत्वम्? १०। नाद्यः, ब्रह्मणोऽपि मिथ्यात्वप्रसंगात्, तस्य स्वप्रकाशेन त्वया सर्वप्रमाणगोचरतानंगीकारात्। न द्वितीयः, सद्वादिभिरंगीकृतत्वेनार्थांतरत्वात् तस्य तस्य शुक्तिशकलादेस्तेनतेन रजताद्याकारेण प्रतीयमानतयाऽप्रमाणज्ञानविषयत्वात्, सर्वस्य प्रपंचस्य क्षणिकमिदं ब्रह्मकार्यमिदमनिर्वचनीयमिदमिति च मिथ्याज्ञानगोचरतायाः परैरभ्युपगमात्, स्मृतेरप्रमाणतया तद्विषयस्य तथात्वानंगीकाराच्च। न

तृतीयः, उक्तदोषानुषक्तेरेव । न चतुर्थः, सद्विलक्षणस्यापि शशविषाणादेरमिथ्यात्वात् । न पंचमः, एकतरनिषेधस्यान्यतरविधिनांतरीयकतया तदसंभवात् । न षष्ठः, अनिर्वचनीयाविद्याया अप्रसिद्धत्वात्, अग्रहणमिथ्याज्ञानलक्षणविद्यायास्तत्कार्यस्य च प्रवृत्तिसंस्कारादेः सत्यत्वात् । न सप्तमः, ज्ञाननिवर्त्यस्यापि ज्ञानसुखादेः सत्यत्वात्, सर्वस्य सत्यत्वेपि परैरीश्वरज्ञाननिवर्त्यत्वांगीकारात् । नाष्टमः, प्रमाणेन यदुपाधौ यः प्रतिपन्नस्तत्रैतस्य निषेधासंभवात्, अन्यथातिप्रसंगात्, भ्रांतिप्रतिपन्नोपाधौ निषेधप्रतियोगित्वस्य सत्त्वेपि संभवेनार्थांतरत्वात्, अन्यथाख्यातिवादिभिरपि क्वचिन्निषिद्धस्यान्यत्र सत्तास्वीकारात् । न नवमः, बाधकज्ञानविषयत्वं तन्निवर्त्यत्वं वा बाध्यत्वमित्यभ्युपगमेऽप्यर्थांतरतायास्तादवस्थात्, शुक्त्यादेरपि बाधकज्ञानविषयत्वांगीकारात्, बाधकज्ञानेन पूर्वज्ञाननिवृत्त्यभ्युपगमाच्च । न दशमः, संयोगविभागशब्दात्मविशेष-

गुणानां प्रदेशवृत्तीनां स्वात्यंताभावसमानाधिकरणतया प्रतीयमानानामपि परैः सत्यत्वांगीकारादर्थांतरतायाः दुरतिक्रमात्, तदेवं न प्रपंचमिथ्यात्वनिरुक्तिः । अत्रोच्यते-स्वाश्रयेणाभिमन्निष्ठात्यंताभावप्रतियोगित्वं मिथ्यात्वम् । न हि तेषामन्यत्र सत्ता संभवति तत्रापि चेत्सा न स्यात्तदा गले पादुकान्यायेन मृषात्वमेव पर्यवस्येत् । न च निराश्रयेषु नित्येषु भावेषु सा नास्तीति लक्षणस्याव्याप्तिः, ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य कार्यतया कारणाश्रितत्वस्य व्यवहारदशायां रजतादेरिव शुक्त्याश्रिततायाः स्वीकारात् । न चातिव्याप्तिः, सत्यस्य ब्रह्मणो निराश्रयत्वात्तस्य तन्निष्ठात्यंताभावप्रतियोगितायाः शंकितुमशक्यत्वात् । न च परैः प्रदेशवृत्तितयाभ्युपगमेषु संयोगविभागशब्दादिषु सत्येष्वपि लक्षणस्य सद्भावादर्थांतरताभावाभावयोरेकाधिकरणत्वाभ्युपगमे सर्वत्रैव तथाभावापत्तेर्विरोधस्य जगति दत्तजलांजालिताप्रसंगात् । न च किमिति जलां-

जलिर्दीयते यावता भावाभावावपहाय भावभेदेष्वेव गोत्वाश्वत्वघटत्वप्रभृतिष्वयं प्राणान् धारयतीति वाच्यम्, भावाभावयोर्हि साक्षाद्विरोधस्तन्मुखेनैवान्यत्रेति परीक्षकपरिषत्संमतत्वात्, प्रदेशोपाधिभेदेन वा तत्र विरोधसमाधाने भावात्यंताभावयोर्भिन्नाधिकरणत्वेन लक्षणस्य तत्र सत्ये कुतोऽसंभवः, कुतस्तरां चातिव्याप्तिः कुतस्तमां चार्थांतरता, तदेवं न मिथ्यात्वानिरुक्तिरिति। पुनः कीदृशम्—श्रीनानकाब्जचरणाब्जकपर्फरीकम् । श्रीनानकश्चासावब्जश्चंद्रश्चेति श्रीनानकाब्जस्तस्य चरणाब्जकयोः पर्फरीकं किसलयं नवीनपत्रमिति यावत् । पर्फरीकादयश्च ईकन्नन्ता निपात्यंते 'स्फुर—स्फुरणे' अस्मादीकन्धातोः पर्फरादेशश्च एतच्चोज्ज्वलदत्तरीत्योक्तम् । वस्तुतस्तु धातोर्द्वित्वमुकारस्याकारः सलोपः रुक् चाभ्यासस्येति दशपाद्यां । यदुक्तं तदेव न्याय्यम् ।"चरेर्नुम्च" इत्युत्तरग्रंथानुरोधेन द्वे रुक् चेत्याद्यनुवृत्तेर्न्याय्यत्वात् । "नैतौ शिवतुर्फरीपर्फरीकौ" इति

मंत्रस्य वेदभाष्ये तु 'ञि फला—विशरणे' 'पॄ—पालनपूरणयोः' 'पर्व, पूर्व पूरणे' एषामन्यतमस्य निपातनमिदमाश्रित्य शत्रूणां विदारयितारौ, स्तोतॄणां पालकौ,इष्टार्थस्य पूरयितारौ चेति व्याख्यातम् । पुनः कीदृशम् । कामस्य मोहकृतये कृतवर्वरीकम् । कामस्य मनोजस्य मोहकृतये मोहनार्थं कृतो वर्वरीकः कुटिलकेशो येन स तम् "शॄपॄवॄञां द्वे रुक् चाभ्यासस्य" इति सूत्रेण 'वृञ्—वरणे' अस्मादौणादिक ईकन् द्विर्वचनमभ्यासस्य रुगागमश्चेति।यद्यप्यमरदासस्वरूपस्य वृद्धत्वादेतत्कथनमनुपयुक्तं तथापि कदाचित्काममानभंगाय कृतमिति ध्येयम्।पुनः कीदृशम्, ईशोत्सवाय समये[1] धृतदर्दरीकम् । ईशोत्सवाय परमेश्वरमहसे "उत्सवो मह उत्सेके इच्छाप्रसवकोपयोः" इति मेदिनी । धृतो दर्दरीको वादित्रं येन स तम् 'दॄ—विदारणे' अस्मादीकन्धातोर्दर्दरादेशः । वस्तुतश्च पर्फरीकवद्धातोर्द्वित्वं रुक्

१ समये नीराजनादिकाले ।

चाभ्यासस्येति व्याख्येयः, उत्तरखंडे ऋकारस्य गुणे कृते रपरत्वमिति॥ ॥मूर्तिर्नानकचंद्रस्य कामादेर्मानमारकः ॥ हीरासिंहं सदापायादमरदासो हरिप्रियः॥ ४॥

अहम् अमरदासं नित्यं भजामि अमरो भावप्रधाननिर्देशः, तथा च अमरत्वं दासतीत्यमरदासस्तम्। कथंभूतम् अलीकतर्कम्, अलीकं मिथ्याभूतं तर्कः प्रपंचो यस्मिन् स तम् "अलीकं त्वप्रियेनृते' इत्यभिधानात्। ननु किमिदं प्रपंचस्य मिथ्यात्वं प्रमाणागम्यत्वम् १, अप्रमाणज्ञानगम्यत्वंवा २, अयथार्थज्ञानगम्यत्वं वा ३, सद्विलक्षणत्वं वा ४, सदसद्विलक्षणत्वं वा ५, अविद्यातत्कार्ययोरन्यतरत्वं वा ६, ज्ञाननिवर्त्यत्वं वा ७, प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं वा ८, बाध्यत्वं वा ९, स्वात्यंताभावसमानाधिकरणतया प्रतीयमानत्वं वा १० । नाद्यः ब्रह्मणोपि मिथ्यात्वप्रसंगात्, तस्य स्वप्रकाशेन त्वया सर्वप्रमाणगोचरतानंगीकारात् । न द्वितीयः, सद्वादिभिरपि तस्यांगीकृतत्वेनार्थांतरत्वात्, तस्य तस्य शुक्तिशकलादेस्तेन तेन रजताद्याकारेण प्रतीयमानतया अप्रमाणज्ञानविषयत्वात्, सर्वस्य प्रपंचस्य क्षणिकमिदं ब्रह्मकार्यमिदमनिर्वचनीयमिदमिति च मिथ्याज्ञानगोचरतायाः परैरभ्युपगमात्, स्मृतेरप्रमाणतया तद्विषयस्य तथात्वानंगीकाराच्च । न तृतीयः, उक्तदोषानुपक्तेरेव । न चतुर्थः, सद्विलक्षणस्यापि शशविषाणादेरमिथ्यात्वात्, न पंचमः । एकतरनिषेधस्यान्यतरविधानांतरीयकतया तदसंभवात् । न षष्ठः, अनिर्वचनीया-

विद्याया अप्रसिद्धत्वात्, अग्रहणमिथ्याज्ञानलक्षणाविद्यायास्तत्कार्यस्य च प्रवृत्तिसंस्कारादेः सत्यत्वात्। न सप्तमः, ज्ञाननिवर्त्यस्यापि ज्ञानसुखादेः सत्यत्वात्, सर्वस्य सत्यत्वेपि परैरीश्वरज्ञाननिवर्त्यत्वांगीकारात्। नाष्टमः, प्रमाणेन यदुपाधौ यः प्रतिपन्नस्तत्र तस्य निषेधासंभवात्, अन्यथातिप्रसंगात्, भ्रांतिप्रतिपन्नोपाधौ निषेधप्रतियोगित्वस्य सत्त्वेपि संभवेनार्थांतरत्वात्, अन्यथाख्यातिवादिभिरपि क्वचिन्निषिद्धस्यान्यत्र सत्तास्वीकारात्। न नवमः, बाधकज्ञानविषयत्वं तन्निवर्त्यत्वं वा बाध्यत्वमित्यभ्युपगमेप्यर्थान्तरतायास्तादवस्थ्यात्, शुक्त्यादेरपि बाधकज्ञानविषयत्वांगीकारात्, बाधकज्ञानेन पूर्वज्ञाननिवृत्त्यभ्युपगमाच्च। न दशमः, संयोगविभागशब्दात्मविशेषगुणानां प्रदेशवृत्तीनां स्वात्यंताभावसमानाधिकरणतया प्रतीयमानानामपि परैः सत्यत्वांगीकारादर्थान्तरताया दुरतिक्रमात्, तदेवं न प्रपञ्चमिथ्यात्वनिरुक्तिः। अत्रोच्यते, स्वाश्रयत्वेनाभिमतनिष्ठात्यंताभावप्रतियोगित्वं मिथ्यात्वम्, न हि तेषामन्यत्र सत्ता संभवति तत्रापि चेत्सा न स्यात्तदा गले पादुकान्यायेन मृषात्वमेव पर्यवस्येत्, न च निराश्रयेषु नित्येषु भावेषु सा नास्तीति लक्षणस्याव्याप्तिः, ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य कार्यतया कारणाश्रितत्वस्य व्यवहारदशायां रजतादेरिव शुक्त्याश्रिततायाः स्वीकारात्। न चातिव्याप्तिः, सत्यस्य ब्रह्मणो निराश्रयत्वात्, तस्य तन्निष्ठात्यंताभावप्रतियोगितायाः शंकितुमशक्यत्वात्। न च परैः प्रदेशवृत्तितयाभ्युपगमेषु संयोगशब्दादिषु सत्येष्वपि लक्षणस्य सद्भावादर्थान्तरताभावाभावयोरेकाधिकरणत्वाभ्युपगमे

सर्वत्रैव तथाभावापत्तेर्विरोधस्य जगति दत्तजलांजलिताप्रसंगात् । न च किमिति जलांजलिर्दीयते यावता भावाभावावपहाय भावभेदेष्वेव गोत्वाश्व-त्वघटत्वप्रभृतिष्वयं प्राणान् धारयतीति वाच्यम्, भावाभावयोर्हि साक्षाद्वि-रोधस्तन्मुखेनैवान्यत्रेति परीक्षकपरिषदसंमतत्वात्, प्रदेशोपाधिभेदेन वा तत्र विरोधसमाधाने भावात्यंताभावयोर्भिन्नाधिकरणत्वेन लक्षणस्य तत्र सत्ये कुतः संभवः, कुतस्तरां चातिव्याप्तिः, कुतस्तमां चार्थांतरता, तदेवं न मिथ्यात्वानिरुक्तिरिति । पुनः कथंभूतं श्रीनानकाब्जचरणाब्जकपर्फ-रीकम्, नानकश्चासावब्ज इंदुश्चेति नानकाब्जः नानकाब्ज एव नान-काब्जकः। स्वार्थे कः प्रत्ययः। तस्य चरणाब्जकयोश्चरणकमलयोः पर्फरीकः नूतनपत्रम् स नानकाब्जचरणाब्जकपर्फरीकः श्रीयुतो नानकाब्जचरणा-ब्जकपर्फरीकश्च स तम् । पुनः कथंभूतं कामस्य मोहकृतये कृतवर्वरीकम् कामस्य मोहार्थं कृतो वर्वरीकः कुटिलकेशो येन स तम् । पुनः कथंभूतं ईशोत्सवाय समये धृतदर्दरीकम्, ईशस्य उत्सवः ईशोत्सवः तस्मै समये नीराजनादिकाले धृतः दर्दरीको वादित्रं येन स तम् ॥ ४ ॥

**श्रीशोटिवंशजलधारकपुण्डरीकं**
**पुण्यप्रतापविलसच्छुभझर्झरीकम् ॥**
**हस्ताब्जमध्यविधृतामृतकर्करीकं**
**शौटीरवन्तमतुलं गुरुरामदासम् ॥ ५ ॥**

पूर्वश्लोकाद्भजामीति क्रियानुषज्यते नित्यमिति च। अहं गुरुरामदासं नित्यमनवरतं भजामि सेवे। रमंते योगिनोऽस्मिन्निति रामो विष्णुस्तस्य दासो भृत्यः। यद्वा—दासो ज्ञातात्मा "दासो भृत्ये च शूद्रे च ज्ञातात्मनि च धीवरे" इति मेदिनी। रामश्चासौ दासश्चेति रामदासः, गुरुश्चासौ रामदासश्चेति स तम्। पुनः कीदृशम्—श्रीशोढिवंशजलधारकपुंडरीकं श्रीयुक्तशोढिवंश एव जलधारकः सरस्तस्मिन् पुण्डरीकं सितकमलभूतम्। पुण्डति अन्यपुष्पाणां गंधं शोभां च चूर्णीकरोतीति "पर्फरीकादयश्च" इतीकनि तस्य रुटि साधुः। 'पुणतेः पुण्डरीकम्' इत्युज्ज्वलदत्तः "पुण्डरीकं सिताम्भोजे सितच्छत्रे च भेषजे। पुंसि व्याघ्रेऽपि दिङ्नागे कोशकारांतरेपि च" इति मेदिनी। पुनः कीदृशम्—पुण्यप्रतापविलसच्छुभझर्झरीकं, पुण्यं धर्मः, प्रतापः प्रभावः, ताभ्यां विलसद्देदीप्यत् शुभयुक्तं झर्झरीकं शरीरं यस्य स तम्। 'झृष्—वयोहानौ' अस्मा-

दीकन् धातोर्झर्झरादेशः । वस्तुतस्तु पर्फरीकवद्धातोर्द्वित्वं रुक् चाभ्यासस्य व्याख्येयः । पुनः कीदृशम्—हस्ताब्जमध्यविधृतामृतकर्करीकं हस्ताभिन्नकमलमध्ये विधृता स्थापितामृतस्य पीयूषस्य कर्करीका गलंतिका येन स तम् । 'डुकृञ्—करणे' अस्मादीकन्, धातोर्द्वित्वम्, अभ्यासस्य रुक् ।'कर्कर्यालुर्गलंतिका'इत्यमरः। पुनः कीदृशम्--शौटीरवंतं वीर्यवंतं गुणवंतं वा "शौटीरस्त्यागवीर्ययोः"इति।पुनः कीदृशम्-अतुलं निरुपममिति॥

॥ शोढिवंशधरस्त्यागी धर्मात्मामृतजीवकः ॥ हीराहरिं नरेंद्रं वै रामदासः पुनातु तम् ॥ ॥ ५ ॥

पूर्वश्लोकात् भजामीति क्रियानुषज्यते अहं गुरुं रामदासं भजामि रमंते योगिनोस्मिन्निति रामः दासो ज्ञातात्मा "दासो भृत्ये च शूद्रे च ज्ञातात्मनि च धीवरे" इति मेदनी । रामश्चासौ दासश्चेति रामदासः गुरुश्चासौ रामदासश्चेति स तम् । कथंभूतं श्रीशोटिवंशजलधारकपुंडरीकम्, श्रीयुक्तशोटिवंश एव जलधारकः सरस्तस्मिन् सितकमलभूतम् । पुनः कथंभूतं पुण्यप्रतापविलसच्छुभमर्भरीकं पुण्यं धर्मः प्रतापः प्रभावः ताभ्यां विलसद्देदीप्यत् शुभयुक्तंभर्भरीकम् शरीरं यस्य स तम् । पुनः

कथंभूतम् हस्ताब्जमध्यविधृतामृतकर्करीकम् हस्ताभिन्नकमलमध्ये विधृता स्थापिता अमृतस्य कर्करीका पात्रविशेषो येन स तम्। पुनः कथंभूतं शौटीरवंतं शौटीरस्त्यागः अस्यास्तीति शौटीरवान तम्। पुनः किंभूतम् अतुलम् निरुपमम् ॥ ९ ॥

श्रीरामदासचरणाब्जकचञ्चरीकं
चिन्ताप्रगाढतमसे पशुपर्फरीकम् ॥
वाणप्रवेगपतनैर्हतशर्शरीकं
वन्देऽहमर्ज्जुनगुरुं मतमर्मरीकम् ॥ ६ ॥

अहमेतत्कालिकस्वतंत्रोच्चारयिता अर्जुनगुरुं वंदे। अर्ज्जयति पुण्यमित्यर्ज्जुनः 'अर्जेर्णिलुक्' च इत्युनन्। गृणाति तत्त्वमिति गुरुः, अर्ज्जुनश्चासौ गुरुस्तम्। कीदृशम्—श्रीरामदासचरणाब्जकचंचरीकं श्रीरामदासस्य चरणकमलयोश्चंचरीको भ्रमरः षट्पदस्तम् "चर—गतिभक्षणयोः" अस्मादीकन् द्विर्वचनमभ्यासस्य नुमागमश्च "भ्रमरश्चंचरीकः स्याद्रोलंबो मधुसूदनः। इन्दिन्दिरः पुष्पकीटो मधुदो मधुकेशरः" इति त्रिकाण्डशेषः। पुनः कीदृशम्—चिंताप्रगाढतमसे पशुपर्फरीकं चिंता

एव प्रगाढतमोंधकारस्तस्मै पशु सम्यक् पर्फरीकः सूर्यस्तं पर्फरीकस्य सिद्धिस्तु "शृपृवृञ्" इतिसूत्रेण । पुनः किंभूतम्--बाणप्रवेगपतनैर्हतशर्शरीकं प्रवेगपूर्वकाणि पतनानि प्रवेगपतनानि बाणानां प्रवेगपतनानि बाणप्रवेगपतनानि तैर्हता हिंसिताः शर्शरीकाः हिंसकजना येन स हतशर्शरीकस्तम्। पुनः कीदृशम्-मतमर्मरीकं मतांगीकृतः कृपायोग्यत्वेन मर्मरीको लघुजनो येन स मतमर्मरीकस्तम् । 'मृङ् प्राणत्यागे' अस्मादीकन् धातोर्द्वित्वमभ्यासस्य रुगागमश्चेति ॥ ॥ रामदासांघ्रिकंजे यो लग्नश्चितापहोऽर्जुनः ॥ हिंस्राणां हिंसकः पायाद्वीरासिंहं जनाधिपम् ॥ ६ ॥

अहम् अर्जुनगुरुं वन्दे अहमेतत्कालीनस्वतंत्रोच्चारयिता अर्जयति पुण्यमिति अर्जुनः "अर्जेर्णिलुक्च" इत्युनन्। गृणाति तत्त्वमिति गुरुः "गकारः सिद्धिदः प्रोक्तो रेफः पापस्य दाहकः । उकारो विष्णुरव्यक्तस्त्रितयात्मा गुरुः पर" इति ब्रह्मवैवर्तपुराणोक्तलक्षणको वा गुरुः अर्जुनश्चासौ गुरुश्चेति अर्जुनगुरुस्तम् । कथंभूतम् अर्जुनगुरुम्, श्रीरामदासचरणाब्जकचञ्चरीकम् श्रीरामदासस्य चरणकमलयोश्चंचरीकः षट्पदस्तम् ।

पुनः कीदृशम् चिन्ताप्रगाढतमसे पशुपर्परीकम् चिंता एव प्रगाढतमस्तस्मै पशु सम्यक् पर्फरीको सूर्यस्तम्। पुनः कथंभूतं बाणप्रवेगपतनैर्हतशर्शरीकम् प्रवेगपूर्वकाणि पतनानि प्रवेगपतनानि बाणानां प्रवेगपतनानि बाणप्रवेगपतनानि तैः हता हिंसिताः शर्शरीकाः हिंसकजना येन स हतशर्शरीकः स्तम्। पुनः कथंभूतं मतमर्मरीकं मतोंगीकृतः कृपायोग्यत्वेन मर्मरीको लघुजनो येन स मतमर्मरीकस्तम् ॥ ६ ॥

वन्दे द्विजेन्द्रवपुषं जितचर्चरीकं
विज्ञं मणींद्रनिचयैः कृतघर्घरीकम् ॥
वामं विपक्षसरितामधितर्तरीकं
गोविन्दपृष्ठगहरिं रिपुजर्जरीकम् ॥ ७ ॥

अहं गोविंदपृष्ठगहरिं वंदे पृष्ठे गच्छतीति पृष्ठगः। यद्वा--पृष्ठगो हरिर्यस्य स पृष्ठगहरिः. गोविंदश्चासौ पृष्ठगहरिश्चेति गोविंदपृष्ठगहरिस्तम्। हरिगोविंदमिति यावत्। हरिमित्यत्र गोविंदपृष्ठगत्वं हरिशब्दस्य न तु संज्ञिनस्तदर्थस्येति संज्ञायाः संज्ञित्वाभावात्। अवाच्यवचनं दोषमाहुरालंकारिकाः। तदुक्तमेकावल्याम् "यदवाच्यस्य वचनमवाच्यवचनं हि तत्" इति। स-

माधानं तु गोविंदपृष्ठगशब्दविशेषितहरिशब्देन शब्द-परेण वेदनोपयोग्यो हरिगोविंदो गुरुर्लक्ष्यत इति कथं-चित्संपाद्यम् । कथंभूतम्—द्विजेंद्रवपुषं द्विजेंद्रश्चन्द्रमास्त-त्तुल्यं वपुः शरीरं यस्य स तम् । पुनः किंभूतम्—जित-चर्चरीकं जितः चर्चरीको महाकालो येन स तम्। "चर्च-रीको महाकाले केशविन्यासशाकयोः" इति मेदिनी । पुनः किंभूतम्—विज्ञम् अद्वितीयब्रह्मसाक्षात्कारवन्तम् । पुनः किंभूतम्—मणींद्रनिचयैः कृतघर्घरीकं मणीना-मिंद्रा मणींद्रा महारत्नानि तेषां निचयैः समुदायैः कृता घर्घरीका क्षुद्रघंटिका येन स तम् । "अथ घर्घरीका क्षुद्र-घंटा वादित्रदंडयोः" इति मेदिनी । पुनः किंभूतम्—वामं सुन्दरम् "वामं धने हरे पुंसि कामदेवे पयोधरे ॥ वल्गुप्रती-पसव्येषु" इति मेदिनी। पुनः किंभूतम्—विपक्षसरिताम-धितर्तरीकं विपक्षाः शत्रव एव सरितो नद्यस्तासामाधि-क्येन तर्तरीकः पारगंता । यद्वा—विपक्षाः कामक्रोधा-दयस्त एव सरितो नद्यस्तासामिति "तर्तरीकं वहित्रे स्यान्न

द्वयोः पारगे त्रिषु" इति मेदिनी । पुनः किंभूतम्—रिपुजर्जरीकं रिपवो जर्जरीकाः जरातुराः बहुच्छिद्रा वा यस्य स तम् "जर्जरीकं बहुच्छिद्रे जरातुरेपि च वाच्यवत्"इति मेदिनी॥ ॥ द्विजराजनिभो विज्ञः कालशत्रुदमंकरः॥ हीरासिंहाय देयाद्वै हरिगोविंदकः सुतम् ॥७॥

· अहं गोविन्दपृष्ठगहरिं वन्दे । पृष्ठं गच्छतीति पृष्ठगः पृष्ठगो हरिर्यस्य सः पृष्ठगहरिः गोविन्दश्चासौ पृष्ठगहरिश्चेति गोविन्दपृष्ठगहरिस्तम् । न च नाम्नो विपरीतवर्णत्वेन प्रतिपादनमयुक्तमिति वाच्यम्, छंदोभंगभीत्या विपरीतवर्णत्वेनापि नाम्नः प्रतिपादनस्य कविसंप्रदायसिद्धत्वात्, तथा च "महापूर्वामत्र सरस्वतीमनुभजे शुंभादिदैत्यार्दिनीम्"इति। कथंभूतम्—द्विजेन्द्रवपुषं द्विजेन्द्रश्चंद्रमास्ते न तुल्यं वपुः शरीरं यस्य स तम्। पुनः कथंभूतम्—जितचर्चरीकं जितः पराजितश्चर्चरीको महाकालो येन स तम् । पुनः कथंभूतम्—विज्ञम् अद्वितीयब्रह्मसाक्षात्कारवंतम्। पुनः कथंभूतं—कृतवर्वरीकं कृता विहिता वर्वरीका क्षुद्रघंटिका येन स तम् । तस्या निष्पादनं द्रव्यमंतरा न संभवतीत्याकांक्षायामाह—मणींद्रनिचयैरिति । मणीनामिन्द्राः उत्कृष्टरत्नानि तेषां निचयैः समूहैः। पुनः कथंभूतम्—वामं सुन्दरम्। पुनः कथंभूतम्—विपक्षसरितामधितर्तरीकम्, विपक्षाः कामक्रोधादयस्त एव सरितो नद्यस्तासामध्याधिक्येन तर्तरीकः पारंगतस्तम् । पुनः कथंभूतं—रिपुजर्जरीकं रिपवः शत्रवः जर्जरीका बहुच्छिद्रा यस्यस तम्॥७॥

आनन्दकन्दसदने दशने वसन्तं
ज्ञानं विवेकनयनं दधतं महांतम् ॥
शांतं सरोजवदनं शमनं खराणां
श्रीक्षत्रियेशहरिराजमहं नतोऽस्मि ॥ ८ ॥

अहं क्षत्रियेशहरिराजं नतोस्मि क्षत्रियाणामीशः क्षत्रियेशः हरीन् चंद्रादीन् राजयति प्रकाशयतीति हरिराजः क्षत्रियेशश्चासौ हरिराजश्चेति क्षत्रियेशहरि-राजः श्रीभिर्युक्तः क्षत्रियेशहरिराजस्तम्। "श्रीः सिंहे च कपौ शुके हरिर्हरे चामीकरे भार्गवे चंद्रेभे कविरा-जि वाजिवदने वंशे यमे पारदे। नागे वर्णसमीरणेपि दहने स्कंदे च संक्रदने मार्तंडे शनिपन्नगेश्वरदिने खड्गे हरिः कीर्तितः" इति शारदी नाममाला। किंभूतम्-आनंदकंदसदने वसंतम्, आनंद एवेत्यानंदकस्तं ददाती-त्यानंदकंदं तच्च तत् सदनं चानंदकंदसदनं तस्मिन्नानंद-कंदसदने वसंतं वासं कुर्वंतम्। यद्वा१—आनंद एवेत्यानं-दकः तम्। स्वार्थे कः। आनंदस्वरूपमित्यर्थे हरिराज-

१ आनन्दकं ददातीत्यानन्दकदमिति स्यादित्यरुचेराह—यद्वेति।

विशेषणम् । पुनः किंभूतम्—दशने दसदने वसंतं दशने शिखरे अत्युच्चैरिति यावत् । "दशनः शिखरे दंते कवचे तु नपुंसकम्" इति मेदिनी । दोऽचलं च तत् सदनं गृहं च दसदनं तस्मिन् वसंतम् ।"दः पुमानचले दंते" इति कोशः।"सदनं मंदिरे तोये" इति मेदिनी । अचलस्थानत्वं च भगवत्स्थानस्यैव "आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन। यद्गत्वा न निवर्तंते तद्धाम परमं मम॥" इति भगवद्वचनात् । पुनः किंभूतम्—महांतं देशकालवस्तुपारिच्छेदशून्यम् । पुनः किंभूतम्—शांतं भक्तिरसयुक्तम् । भक्तिरसश्च पंचधा—"शांतं दास्यं च वात्सल्यं सख्यमुज्ज्वलमेव च । अमी पंच रसा मुख्या ये प्रोक्ता रसवेदिभिः॥" विभावानुभावसात्त्विकसंचारिभिः स्थायीभावाख्यो भक्तिरसो भवति। यद्विषयको भावः सविषयालंबनविभावो यथा श्रीकृष्णः, यो भावस्याधिकरणं स आश्रयालंबनविभावो यथा श्रीकृष्णभक्तः । ये स्मारका भूषणालंकारादयस्ते उद्दीपनविभावाः । ये

भावज्ञापका गीतनृत्यादयस्तेऽनुभावाः । ये चित्तादिक्षोभकास्ते सात्त्विकाः । ते चाष्टौ–स्तंभ–स्वेद–रोमांच–वेपथु–स्वरभंग–वैवर्ण्या–ऽश्रु–पुलका इति । निर्वेद–हर्ष–गर्व–मद–वितर्क–मोहादयो व्यभिचारिणः । तत्र शांतभक्तिरसे निखिलजगदेककर्त्तानंतानवद्यसर्वज्ञत्वसत्यसंकल्पत्वादिकल्याणगुणकरोऽनवधिकातिशयानंदस्वरूपः परमात्मा नारायणः परं ब्रह्म नराकृतिः श्रीकृष्णो विषयालंबनः, शंकरेंद्रादयो देवा आश्रयालंबनाः, उपनिषद्विचारादय उद्दीपनविभावाः, नासाग्रदृष्ट्यादयोनुभावाः, भलयवर्जिता अश्रुपुलकरोमांचाख्याः सात्त्विकाः, निर्वेदस्मृत्यादयः संचारिणः, शांतिरतिस्थायीति । दास्यरसे तु सर्वेश्वरः सर्वशक्तिः परमकारुणिकः शरणागतपालकः भक्तवत्सलः प्रभुः श्रीकृष्णो विषयालंबनः, अर्जुनोद्धवपरीक्षिदादय आश्रयालंबनाः, भक्ततुलसीपदचिह्नगुणगोपीचंदनोच्छिष्टस्रग्गंधमाल्यादय उद्दीपनविभावाः, श्रीकृष्णोक्तकरुणादयोऽनुभावाः, स्तंभादयोष्टौ सात्त्विकाः, हर्षगर्वादयो हि संचारिणः,

स्नेहादिस्थायी, श्रीकृष्णवियोगे तु दश दशाः ।-अंगेषु तापः कृशता जागर्य्यालंबशून्यता अधृतिर्जडता व्याधिरुन्मादो मूर्च्छितं मृतिरिति । एवं सख्यरसेपि चतुरशिरोमणिः सत्यसंकल्पो मेधावी सुंदरः सुवेषो द्विभुजः श्रीकृष्णो विषयालंबनः, मधुमंगलसुबलमनःसुखादयोऽनेकविधाः सखाय आश्रयालंबनाः, शृंगवेत्रादयश्चोद्दीपनविभावाः, एकशय्यासनभोजनविविधविचित्रपरिहासविहारवाह्यवा-वाहकादिकेलिप्रभृतयोऽनुभावाः, स्तंभादयोष्टौ सात्त्विकाः, हर्षगर्वाद्याः संचारिणः, सर्वलक्षणपरीतः स्थायिभावः, दश दशाः पूर्ववत् । वात्सल्यरसे तु कोमलांगः कलभाषणः सर्वलक्षणसंयुक्तः लाल्यबालः श्रीकृष्णो विषयालंबनः, नंदोपनंदरोहिणीयशोदाद्या आश्रयालंबनाः, स्मितजल्पितचापल्यबाल्यचेष्टिताद्या उद्दीपनविभावाः, अंगाभिमार्जनाशीर्वादनिदेशलालनपालनादयोऽनुभावाः, अत्राष्टौ सात्त्विकाः स्तनस्रवस्तु विशेषः । हर्षशोकाद्या व्यभिचारिणः, वात्सल्यं स्थायी । वियोगे दश दशाः पूर्ववत् । शुक्लरसे च सर्वमाधुर्य्यवान् कमनीयकिशोर-

मूर्त्तिः श्रीकृष्णो विषयालंबनः, श्रीकृष्णप्रिया आश्रयालंबनाः, गुणवंशीरववसंतकोकिलाद्या उद्दीपनाः, कटाक्षमोक्षस्मितादयोऽनुभावाः सर्वेऽपि सात्त्विकाः, आलस्येर्ष्याजुगुप्साद्यैर्हीना निर्वेदादयो व्यभिचारिणः। प्रियतारतिस्थायिहास्यादीनामत्रैवांतर्भावात्पंचैव रसा इति। पुनः किंभूतम्—सरोजवदनं सरोजवद्वदनं मुखं यस्य स तम्। पुनः किंभूतम्—खराणां दुष्टानां शमनं कालरूपम्। पुनः किंभूतम्—ज्ञानं जीवब्रह्मैक्यरूपम्। ब्रह्माहमिति ज्ञानत्वं तु तत्त्वमस्यादिवाक्योत्थसम्यग्धीत्वं, वेदांतिनो मते जगतो ब्रह्मणो विवर्तत्वस्वीकारात् ब्रह्मतद्विवर्तरूपजगतोरभेदः। तथा च श्रुतिः—"सर्वं खल्विदं ब्रह्म" इति, "एकमेवाद्वितीयं ब्रह्म, नेह नानास्ति किंचन" इति। नन्वारंभवादे आरभ्यमारंभकादत्यंतभिन्नं यथा परमाणवो द्व्यणुकादिक्रमेण ब्रह्मांडपर्यंतं जगदारंभते असदेव कार्यकारणव्यापारादुत्पद्यत इति न्यायमतात् वेदांतमतभेदः। परिणामवादे तु सत्त्वरजस्तमोगुणात्मकं प्रधानं महदादिक्रमेण जगदाकारेण परिणमते पूर्वमपि

सूक्ष्मरूपेण सदेव कार्यकारणव्यापारादभिव्यज्यत इति सांख्यमते कार्यकारणयोरभेदः। विवर्तवादेपि ब्रह्मैव मायावशान्मिथ्यैव जगदाकारेण कल्पत इति वेदांतमतेपि जगद्ब्रह्मणोरभेदः। तथा च सांख्यमतवेदांतमतयोः कथं भेद इति चेच्छृणु—उपादानत्वाभिमतवस्तुसत्तासमानसत्ताकत्वे सति तदवस्थाविशेषत्वं तत्परिणामत्वम्। उपादानत्वाभिमतवस्तुसत्ताविषमसत्ताकत्वे सति तदवस्थाविशेषत्वतद्विवर्तत्वमितिसत्तात्रयांगीकारवादिमतानुसारेण तयोर्भेदः, उपादानत्वाभिमतवस्तुसलक्षणत्वे सति तदवस्थाविशेषत्वं तत्परिणामत्वम्। उपादानत्वाभिमतविलक्षणत्वे सति तदवस्थाविशेषत्वं तद्विवर्त्तत्वम्। कारणत्वाभिमतवस्त्वभिन्नत्वे सति तत्कार्य्यत्वं तत्परिणामत्वम्। उपादानत्वाभिमतवस्तुनः सकाशाद्वस्तुतो भेदाभेदाभ्यां दुर्निरूपत्वे सति तत्कार्य्यत्वमिति तु सत्तैक्यसत्तात्रैविध्यवादिनोर्मते साधारण्येन लक्षणं तयोर्भेदज्ञापकं जानीहि। अथ ज्ञानकारणाभावे कथं ज्ञान-

धारणमित्याशंक्याह—विवेकेति । विवेकाभिन्नं यन्नयनं तद्द्धानमित्यर्थः । इदमुपलक्षणं विरागादीनाम् । विरागस्तावत् इहामुत्रार्थफलभोगविरागः, विवेकस्तु ब्रह्मैव नित्यं वस्तुतोऽन्यदखिलमनित्यमिति विवेचनम् । श्रवणादिव्यतिरिक्तविषयेभ्यो मनसो निग्रहः शमः, श्रवणादिव्यतिरिक्तविषयेभ्यो बाह्येंद्रियाणां निवर्तनं दमः, निवर्त्तितानामिंद्रियाणां श्रवणादिव्यतिरिक्तविषयेभ्य उपरमणमुपरमः, अथवाऽवश्यकर्तव्यतया वेदविहितानां कर्मणां विधिना त्यागः । शीतोष्णादिद्वंद्वानां सहिष्णुता तितिक्षा, निगृहीतस्य मनसः श्रवणादौ तदनुगुणविषये च समाधिः समाधानम्, गुरुवेदांतादिवाक्येषु विश्वासः श्रद्धा, मोक्षेच्छावत्ता मुमुक्षुता, इत्यादिसाधनयुक्तो गुरूपदेशेन ब्रह्माहमिति ज्ञात्वा ब्रह्म संपद्यते । तथा च श्रुतिः—"तदेव निष्कलं ब्रह्म निर्विकल्पं निरंजनम् । तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म संपद्यते ध्रुवम् ॥" इति।

हरिराजः कालरूपो दुष्टानां ज्ञानदो महान् ।
हीरासिंहाय शं लायात्कमलाक्षो रसप्रदः ॥ ८ ॥

अहं क्षत्रियेशहरिराजं नतोस्मि क्षत्रियाणामीशः क्षत्रियेशः हरीन् सूर्य-चंद्रादीन् राजयति प्रकाशयतीति हरिराजः क्षत्रियेशश्चासौ हरिराजश्चेति क्षत्रियेशहरिराजः श्रीभिर्युक्तः क्षत्रियेशहरिराजः श्रीक्षत्रियेशहरिराजस्तम् । कथंभूतम्—आनंदकंदसदने वसंतम् । आनंद एवेत्यानंदकस्तं ददातीत्यानंदकंदं तच्च तत् सदनं चानंदकंदसदनं तस्मिन् आनंदकंदसदने वसंतं वासं कुर्वंतम् । कथंभूते सदने शिखरे सर्वोपरि वर्त्तमाने । पुनः कथंभूतं ज्ञानं जीवब्रह्मणोरभेदप्रत्ययं दधतं धारयंतम् । अथ ज्ञानकारणाभावे कथं ज्ञानधारणमित्याशंक्याह—विवेकेति । विवेकाभिन्नं यन्नयनं तद्धानम्। पुनः कथंभूतं महान्तं देशकालवस्तुपरिच्छेदशून्यम् । पुनः कथंभूतं शान्तं भक्तिरसयुक्तम्, भक्तिरसश्च पंचधा—"शान्तं दास्यं च वात्सल्यं सख्यमुज्ज्वलमेव च । अमी पंच रसा मुख्या ये प्रोक्ता रसवेदिभिः ॥" विभावानुभावसात्त्विकसंचारिभिः स्थायिभावाख्यो भक्तिरसो भवति । यद्विषयको भावः स विषयालंबनविभावो यथा श्रीकृष्णः । यो भावस्याधिकरणं स आश्रयालंबनविभावो यथा श्रीकृष्णभक्तः। ये स्मारका भूषणालंकारादयस्त उद्दीपनविभावाः। ये भावज्ञापका गीतनृत्यादयस्तेऽनुभावाः। ये चित्तादिक्षोभकास्ते सात्त्विकाः। ते चाष्टौ-स्तंभस्वेदरोमांचवेपथुस्वरभंगवैवर्ण्याश्रुपुलका इति, निर्वेदहर्षगर्वमदवितर्कमोहादयो व्यभिचारिणः । तत्र शांतिभक्तिरसे निखिलजगदेककर्त्ता अनन्तानवद्यसर्वज्ञसत्यसंकल्पत्वादि-कल्याणगुणाकरोऽनवधिकातिशयानन्दस्वरूपः परमात्मा नारायणः परं ब्रह्म नराकृतिः श्रीकृष्णो विषयालंबनः, शंकरेन्द्रादयो देवा आश्रयालंबनाः, उपनिषद्विचारादय उद्दीपनविभावाः नासाग्रदृष्ट्यादयोऽनुभावाः,

प्रलयवर्जिता अश्रुपुलकरोमांचाख्याः सात्त्विकादिनिर्वेदस्मृत्यादयः संचारिणः, शांतिरतिस्थायीति । दासस्य रसे तु सर्वेश्वरः सर्वशक्तिः परमकारुणिकः शरणागतपालको भक्तवत्सलः प्रभुः श्रीकृष्णो विषयालंबनः, अर्जुनोद्धवपरीक्षिदादय आश्रयालंबनाः, भक्ततुलसीपदचिह्नगुणगोपिचन्दनोच्छिष्टस्रग्गन्धमाल्यादय उद्दीपनविभावाः, श्रीकृष्णोक्तकरुणादयोऽनुभावाः, स्तंभादयोऽष्टौ सात्त्विकाः,हर्षगर्वादयो हि सञ्चारिणः,स्नेहादिस्थायी । श्रीकृष्णवियोगे तु दश दशाः–अंगेषु तापः कृशता जागर्यालंबशून्यता अधृतिर्जडता व्याधिरुन्मादो मूर्च्छितं मृतिरिति । एवं सख्यरसेपि चतुरशिरोमणिसत्यसंकल्पो मेधावी सुन्दरः सुवेशो द्विभुजः श्रीकृष्णो विषयालंबनः, मधुमंगलसुबलनामानः सखादयोऽनेकविधाः सखाय आश्रयालंबनाः, शृङ्गवेत्रादयश्चोद्दीपनविभावाः, एकशय्यासनभोजनविविधविचित्रपरिहासविहारवाद्यवाहकादिकेलिप्रभृतयोऽनुभावाः, स्तंभादयोष्टौ सात्त्विकाः, हर्षगर्वाद्याः सञ्चारिणः, सर्वलक्षणपरीतः स्थायिभावः, दश दशा पूर्ववत्, वात्सल्यरसे तु कोमलांगः कलभाषणः सर्वलक्षणसंयुक्तः लाल्यबालः श्रीकृष्णो विषयालंबनः, नन्दोपनन्दरोहिणीयशोदाद्या आश्रयालंबनाः,स्मितजल्पितचापल्यबाल्यचेष्टिताद्या उद्दीपनविभावाः अंगाभिमार्जनाशीर्वादनिदेशलालनपालनादयोऽनुभावाः,अत्राष्टौ सात्त्विकाः स्तनस्रवस्तु विशेषः,हर्षशोकाद्या व्यभिचारिणः, वात्सल्यं स्थायी, वियोगे दश दशाः पूर्ववत् । शुक्ररसे च सर्वमाधुर्यवान्कमनीयकिशोरमूर्तिः श्रीकृष्णो विषयालंबनः, श्रीकृष्णप्रिया आश्रयालंबनाः गुणवंशीरववसन्तकोकिलाद्या उद्दीपनाः, कटाक्षमोक्षस्मितादयोनुभावाः सर्वेपि सात्त्विकाः, आलस्येर्ष्या-

जुगुप्साद्यैर्हीना निर्वेदादयो व्यभिचारिणः, प्रियता रतिः स्थायी, हास्यादीनामत्रैवांतर्भावात्पंचैव रसाः । पुनः कथंभूतं सरोजवदनम् कमलमुखम् । पुनः कथंभूतं खराणां शमनम्, खराणां दुष्टानां शमनं कालरूपम् ॥ ८ ॥

यस्मिन्विनाशमखिलं वृजिनं नराणां
दृष्टे प्रयाति सपदींद्रनमस्कृतं तम् ॥
वामस्वभावविनतं शिवदं हि सद्यः
श्रीकृष्णपृष्ठगहरिं गुरुमाभजेऽहम् ॥ ९ ॥

अहं श्रीकृष्णपृष्ठगहरिं गुरुमाभजे पृष्ठे गच्छतीति पृष्ठगः पृष्ठगो हरिर्यस्य सः पृष्ठगहरिः श्रीमांश्चासौ कृष्णश्च श्रीकृष्णः श्रीकृष्णश्चासौ पृष्ठगहरिश्चेति श्रीकृष्णपृष्ठगहरिस्तं श्रीहरिकृष्णमित्यर्थः । हरति सकृदुच्चरितत्वेन सर्वेषां पापमिति हरिः "सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् । बद्धः परिकरस्तेन मोक्षाय गमनं प्रति" इति । हरति रुद्ररूपेण विश्वमिति हरिः "रुद्ररूपेण संहर्ता सर्वेषामपि नित्यशः । भक्तानां पातकध्वंसी हरिस्तेन प्रकीर्तितः॥" इति । कर्षति भक्तानां मन इति कृष्णः । यद्वा—"कृषिरुत्कृष्टवचनो णश्चसद्भक्तिवाचकः ।

अस्यापि दातृवचनं तेन कृष्ण इति स्मृतः ॥ कृषिश्च परमानंदो णश्च तत्पददायकः। द्वयोश्च दाता भगवांस्तेन कृष्ण इति स्मृतः॥ कोटिजन्मकृतं पापं कृषिरित्युच्यते बुधैः । तन्नाशनकरो नाम्ना कृष्ण इत्यभिधीयते ॥ नाम्नां सहस्रं दिव्यानां त्रिरावृत्त्या तु यत्फलम् । एकावृत्त्या तु कृष्णस्य तत्फलं परिकीर्तितम् ॥ कृष्णनाम्नः परं नाम न भूतं न भविष्यति । सर्वेभ्यश्च परं नाम कृष्णेति परिकीर्तितम् ॥ कृष्णकृष्णेति हे गोपि यस्तं स्मरति नित्यशः । जलं भित्त्वा यथा पद्मं नरकादुद्धराम्यहम् ॥ कृष्णेति मंगलं नाम यस्य वाचि प्रवर्तते । भस्मीभवंति सद्यस्तन्महापातककोटयः ॥ सर्वेषामेव यज्ञानां तीर्थानां यत्फलं स्मृतम् । तदेव कृष्णनाम्नोपि कथितं परमर्षिभिः ॥ वेदपाठसहस्राणि प्रादक्षिण्यं भुवः शतम् । कृष्णनामजपस्यास्य कलां नार्हति षोडशीम् ॥" इति ब्रह्मवैवर्तीयकृष्णखंडात् । यत्तदोर्नित्यसंबंधात्तं कमित्याकांक्षायामाह—यस्मिन्निति । यस्मिन् दृष्टे साक्षात्कृते सति नराणामखिलं वृजिनं

पापम् "कलुषं वृजिनैनोघः" इत्यमरः । सपदि तत्क्षणमेव विनाशं विध्वंसं प्रयाति । तं कथंभूतम्-इंद्रनमस्कृतम् । इंद्रेण नमस्कृतम् इंद्रनमस्कृतम् । पुनः किंभूतम्—वामस्वभावविनतम्, वामस्वभावेन शोभनीयस्वभावेन विनतो विनययुक्तस्तम् । पुनः किंभूतम्—हीति निश्चये, सद्यः शिवदं शिवं कल्याणं ददातीति शिवदस्तम् "शिवो मोक्षे महादेवे कीलकग्रहयोगयोः । वालुके गुग्गुलौ वेदे पुंडरीकद्रुमे पुमान् ॥ सुखक्षेमजले क्लीबं शिवाझाटामलौषधौ । अभयामलकी गौरी फेरुसक्तफलासु च ॥ शिवस्तु भूर्जपत्रे स्यात्तथोदारमहीपतौ" इति मेदिनी ॥

दृष्टमात्रोऽपि यः पुंसां पापं नाशयति ध्रुवम् ।
हीरासिंहं धराधीशं हरिकृष्णः पुनातु सः ॥ ९ ॥

अहं तं श्रीकृष्णपृष्ठगहरिं गुरुमाभजे । पृष्ठे गच्छतीति पृष्ठगः पृष्ठगो हरिर्यस्य स पृष्ठगहरिः श्रीमांश्चासौ कृष्णश्च श्रीकृष्णः श्रीकृष्णश्चासौ पृष्ठगहरिश्चेति श्रीकृष्णपृष्ठगहरिस्तम्, श्रीहरिकृष्णमित्यर्थः । यत्तदोर्नित्यसंबन्धात् तं कमित्याकांक्षायामाह—यस्मिन्निति । यस्मिन् दृष्टे साक्षात्कृते सति नराणामखिलं वृजिनं पापं "कलुषं वृजिनैनोघः" इत्यमरः । सपदि तत्क्षणमेव विनाशं प्रयाति । कथंभूतं तम्, इन्द्रनमस्कृतम् इन्द्रेण नमस्कृ-

त इन्द्रनमस्कृतस्तम् । पुनः कथंभूतं वामस्वभावविनतम् वामस्वभावेन सुन्दरस्वभावेन विनतो नम्रीभूतस्तम् । पुनः कथंभूतं हि प्रसिद्धौ सद्यः शीघ्रं शिवं भद्रं ददातीति शिवदस्तम् ॥ ९ ॥

धर्मं प्रपातुमवतीर्णममेयतत्त्वं
हन्तारमाश्रितहरिं यवनाधिपानाम् ॥
कर्तारमंकनिधिसंचयदं नरेभ्यः
श्रीखड्गधारकगुरुं शरणं प्रयामि ॥ १० ॥

अहं श्रीखड्गधारकगुरुं शरणं प्रयामि खड्गस्य गंडकशृंगस्य संकल्पादिविध्युपयोगित्वेन धारकः खड्गधारकः श्रीखड्गधारकश्चासौ गुरुश्चेति श्रीखड्गधारकगुरुस्तम् । कीदृशम्-धर्मं प्रपातुमवतीर्णं धर्मं 'चोदनालक्षणोऽर्थो धर्मः' इति लक्षणलक्षितं रक्षितुम् अवतीर्णं कृतावतारम् । पुनः किंभूतम्—अमेयतत्त्वं वृत्त्यवच्छिन्नचैतन्याविषयं न तु वृत्त्यविषयम् । अतः "यतो वाचो निवर्तंते अप्राप्य मनसा सह" "तं त्वौपनिषदं पुरुषं पृच्छामि" इतिश्रुत्योरविरोधः संगच्छत इति भावः । वृत्तिश्चांतःकरणस्याज्ञानस्य वा परिणामः, यद्यपि क्रोधसु-

खादयोंतःकरणपरिणामास्तथाकाशादयश्चाज्ञानपरिणामास्तेषां वृत्तिशब्देन न व्यवहारस्तथापि विषयप्रकाशको योंतःकरणपरिणामः स वृत्तिः, क्रोधसुखादयश्च येंतःकरणपरिणामास्ते न कस्यापि प्रकाशकास्तथाकाशादयश्चेति न ते वृत्तिशब्दव्यवहार्य्याः। किंतु ज्ञानरूपपरिणाम एव प्रकाशकः, तस्यैव वृत्तिसंज्ञा। यद्यपि सुखदुःखकामतृप्तिक्रोधक्षमाधृत्यधृतिलज्जाभयादयश्च येंतःकरणपरिणामास्तेषामपि वृत्तिशब्देनानेकस्थाने व्यवहारस्तथापि तत्त्वानुसंधानाद्वैतकौस्तुभादिग्रंथेषु प्रकाशकपरिणामस्यैव वृत्तित्वमतो मायायास्तथांतःकरणस्य ज्ञानरूपो यः परिणामस्तस्यैवाद्वैतमते वृत्तिशब्दस्य पारिभाषिकार्थत्वमिति। पुनः किंभूतम्—आश्रितहारिम्। आश्रितो हारिर्येन स तम्। पुनः किंभूतम्—यवनाधिपानां यवनाधिराजानां हंतारं हननकर्तारम्। पुनः किंभूतम्—कर्तारं प्रपंचोत्पादकम्। पुनः किंभूतम्—नरेभ्योंकनिधिसंचयदम् अंकनिधयो नवनिधयस्तेषां संचयः समूहस्तं ददातीत्यंकनिधिसंचयदस्तमिति॥

**स्वस्य दत्तं शिरो येन धर्मग्लानौ महात्मना ।**
**हीरा सिंहरतिर्भूयादंघ्र्योस्तस्य वनीयसः ॥ १० ॥**

अहं श्रीखङ्गधारकगुरुं शरणं प्रयामि खङ्गं धारयतीति खङ्गधारकः स चासौ गुरुश्चेति खङ्गधारकगुरुः श्रीयुक्तः खङ्गधारकगुरुः श्रीखङ्गधारकगुरुस्तम् । कथंभूत धर्मं प्रपातुं रक्षितुम् अवतीर्णं कृतावतारम् । पुनः कथंभूतम् अमेयतत्त्वं वृत्त्यवच्छिन्नचैतन्याविषयम् न तु वृत्त्यविषयम् अतः "यतो वाचो निवर्तते अप्राप्य मनसा सह । तं त्वौपनिषदं पुरुषं पृच्छामि" इति श्रुत्योरविरोधः संगच्छत इति भावः । पुनः कथंभूतम् आश्रितहरिम् आश्रितो हरिर्येन स तम् । पुनः कथंभूत यवनाधिपानाम् यवनाधिराजानां हंतारं हननकर्त्तारम् । पुनः कथंभूत कर्तारम् प्रपञ्चोत्पादकम् । पुनः कथंभूतं नरेभ्यः अंकनिधिसंचयदम् अंकनिधयो नवनिधयः तेषां संचयः समूहस्तं ददातीति अंकनिधिसञ्चयदस्तम् ॥ १० ॥

**आराधिता नयनदा नितरां हि येन**
**नीता विनाशमखिला यवना नितांतम् ॥**
**शिष्याः कृता बहुविधा बलशालिना तं**
**गोविन्दसिंहममलं प्रणमामि पूर्णम् ॥ ११ ॥**

अहं तं गोविंदसिंहं प्रणमामि, गां भुवं धेनुं स्वर्गं वेदं वा विन्दतीति गोविंदः "गवादिषु विदेः संज्ञायाम्"

इति शः। वराहरूपेणोद्धरणात् कामधेनोरैश्वर्यप्राप्तेरिंद्रेण स्वर्गस्य निवेदनान्मत्स्यादिरूपेण वेदाहरणात् "नष्टां वै धरणीं पूर्वमविन्दं यद्गुहागताम्। गोविंद इति तेनाहं देवै-र्वाग्भिरभिष्टुतः॥" इति मोक्षधर्मवचनात्। "अहं किलेंद्रो देवानां त्वं गवामिंद्रतां गतः। गोविंद इति लोकास्त्वां स्तो-ष्यंति भुवि शाश्वतम्॥" इति। "गौरेषा भवतो वाणी तां च वेदयतो भवान्। गोविंदस्तु ततो देव मुनिभिः कथ्यते भवान्॥" इति हरिवंशे। यद्वा—गाः क्रतून् भोक्तृत्वेन विंदति लभते इति गोविंदः, "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च।" इति स्मृतेः। यद्वा—गा इंद्रियाणि नियन्तृतया गा आपो जलशायित्वेन वा गां सूर्यं वा प्रकाशकत्वेन विंदतीति गोविंदः। यद्वा—गवा ज्ञानेन वेद्य उपलभ्यो गोविंदः। यद्वा—नंदघोषनिवा-ससमये स्वस्वामिसंबंधेन गाः विंदते लभत इति गोविंदः। उक्तं च श्रीमद्भागवते—"कृष्णो वत्सैरसंख्यातैर्यूथीकृत्य स्ववत्सकान्। चारयंतोऽर्भलीलाभिर्विजह्रुस्तत्रतत्र ह॥" इति। यद्वा—गोभिर्वेदवचोभिर्विद्यते गोचरीक्रियत

इति गोविंदः "तं त्वौपनिषदं पुरुषं पृच्छामि" इति श्रुतेः । औपनिषदत्वमुपनिषदतिरिक्तप्रमाणाविषयत्वं तदप्युपनिषज्जन्यतत्त्वज्ञानापोह्याज्ञानविषयत्वमेव, तेन प्रमाणाविषयत्वेन न जडत्वाद्यनुमानोदय इति । "गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयीदृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च ॥" इति मेदिनी। "गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि ॥ नृस्त्रियोः स्वर्गवज्रांबुरश्मिदृग्बाणलोमसु।" इति केशवः। "गोविंदेत्युक्तमात्रेण हेलया कलिवर्द्धनः । पापौघो विलयं याति दानमश्रोत्रिये यथा ॥ गोविंदेति तथा प्रातर्मध्याह्ने वा निशागमे। कीर्तनात्पुण्यमाप्नोति मखकोटिशतोद्भवम् ॥ गवामयुतकोटीनां कन्यानामयुतायुतैः। तीर्थकोटिसहस्राणां तुल्यं गोविंदकीर्तनम् ॥ तन्नास्ति कर्मजं लोके वाग्जं मानसमेव वा । यन्न क्षपयते पापं कलौ गोविंदकीर्तनात् ॥ महापापानि गोविंद बहुजन्मार्जितान्यपि। सद्यो विलयमायांति सद्यो गोविंदकीर्तनात् ॥" इति। गारुडे चांबरीषं प्रति शौनकवाक्यम्—"अंबरीष शुभं

वाक्यं मयोक्तं शृणु भक्तितः। धर्मार्थकाममोक्षार्थं कुरु गोविंदकीर्त्तनम् ॥ यदीच्छसि परं ज्ञानं ज्ञानाच्च परमं पदम् । तदादरेण राजेंद्र कुरु गोविंदकीर्तनम्॥ हत्यादिपातकादीनां यदीच्छसि परिक्षयम्।संयम्यैंद्रियसंदोहं कुरु गोविंदकीर्तनम् ॥ राज्यं भोगांश्च विपुलान्पुत्रमिच्छसि संपदः । तदा यत्नेन महता कुरु गोविंदकीर्तनम् ॥ रणे यदि रिपुं हंतुं त्वमिच्छसि नराधिप । तदासक्तमना नित्यं कुरु गोविंदकीर्तनम् ॥ पूर्वजन्मकृतानां च पापानामिच्छसि क्षयम् । तदा भूप त्वया कार्यं नित्यं गोविन्दकीर्तनम्॥ वाजपेयसहस्राणां नित्यं फलमवाप्स्यसि । प्रातरुत्थाय भूपाल कुरु गोविंदकीर्तनम् ॥ किं करिष्यसि सांख्येन किं योगैर्नरनायक । मुक्तिमिच्छसि राजेंद्र कुरु गोविंदकीर्तनम्॥ गुरुदाराभिगमने जनन्यां गमने च यत् । तत्पापं विलयं याति गोविंदेति च कीर्तनात् ॥ गोवधादिसमं पापं भ्रूणहत्यासमं च यत्। तत्पापं याति विलयं गोविंदेति च कीर्त्तनात्॥ अभक्ष्यसंभवं राजन् दुष्प्रतिग्रहसंभवम् । तत्पापं विलयं याति कृते गोविंदकीर्त्तने" इति । "गोविंदेति वदञ्जंतुः प्र-

त्यहं नियतेंद्रियः।सर्वपापविनिर्मुक्तः सुरवद्भासते नरः"॥ इति । बृहन्नारसिंहे स्कंदपुराणे च-"गोविंदेति तथा प्रोक्तं भक्त्या वा भक्तिवर्जितम्। दहंते सर्वपापानि युगांताग्निरिवोत्थितः॥ जन्मांतरसहस्रेषु कोटिजन्मांतरेषु यत् । गोविंदकीर्त्तनात्पापं शतधा याति नारद॥अभक्ष्यभक्षणात्पापमगम्यागमनाच्च यत् । नश्यते नात्र संदेहो गोविंदस्य च कीर्त्तनात् ॥ स्वर्णस्तेयसुरापानगुरुदाराभिमर्षणः॥" इति।"हत्यायुतं पानसहस्रयुग्मं गुर्वङ्गनाकोटिनिषेवणं च। स्तेयान्यसंख्यानि हरेः प्रियेण गोविंदनाम्ना निहतानि सद्यः॥गोविंदनामा यः कश्चिन्नरो भवति भूतले। कीर्तनादेव तस्यापि पापं याति सहस्रधा॥"इति।"गोविंदेति सदा भक्त्या येन गीतं महात्मना।सहसा तेन मुच्येत पापात्स गुरुतल्पगात्॥"इति"पापैर्जन्मशतार्जितैरपि तदा मुक्तो मुखे भैरवं नावेक्षे यमकिंकरस्य सहसा रौद्रैर्गणैः संवृतः । विष्णोर्नाम हि केशवाच्युत हरे गोविंद दामोदर प्रद्युम्नेति समुच्चरंतमनिशं नो बाधतेऽयं कलिः॥"इति । सिंचतीति सिंहः 'षिचू क्षरणे' सिचेः "संज्ञायां हनुमौ कश्च" इति

गोविंदस्मरणप्रवर्तनाय सिंहः मध्यमपदलोपी समासः । सिंहशब्दस्तु सत्तार्थकः, "सिंहः कंठीरवे राशौ सत्तमे चोत्तरस्थिते॥" इति मेदिनी । यद्वा—गोविंदस्य सिंहः सेचकस्तर्पक इति । यद्वा—गोविंदासिंहपदयोः सामानाधिकरण्यमिति तं कमित्याकांक्षायामाह—येनेति । येन कर्त्रा सकलसुरमुकुटमणिविद्योतितचरणारविंदा । नयनदा नयने नेत्रे ददातीति नयनदा दुर्गा नितरामतिशयेनाराधिता साक्षात्कृता । तां साक्षात्कृत्य किं कृतमित्यत आह—नीता इति । नीता प्राप्ता विनाशमदर्शनम् अखिलाः बहवो यवना अतिनीचाः, यवनानामतिनीचत्वं च-"नीचानां द्वे सहस्रे द्वे शते चाधिकद्वये । तैः समो यवनः प्रोक्तो न नीचो यवनात्परः" इत्यभियुक्तोक्तेः । नितांतमेकांतं "तीव्रैकांतनितांतानि" इत्यमरः । बहुविधा नानाविधाः शिष्याः शासनयोग्याः कृता विहिताः । किंभूतेन येन बलशालिना पराक्रमवता । कीदृशं गोविंदासिंहम्—अमलं द्वादशविधमलरहितमसंगत्वात् "वसा शुक्रमसृङ्मज्जा मूत्रं विट् कर्णत्वङ्नखाः । श्लेष्माश्रुदूषिका

स्वेदो द्वादशैते मला नृणाम्" इति।एतादृशमलरहितत्वं कथमित्यत आह—पूर्णमिति व्यापकत्वान्मलरहितत्वमितिभावः। यद्वा—पूर्णं समग्ररूपं "पूर्णः शक्ते समग्रे ना पूरिते त्वभिधेयवत्" इति मेदिनी। श्रीगोविंदसिंहाभिधव्यक्तिस्तु धर्मावनायाधर्ममूर्तिकलिनिवृत्तिद्वारा तमालपत्रस्यापि कलिमूर्त्तिमत्त्वं तस्मादेव तेन तन्निषिद्धं शास्त्रानुसारेण तथा च बृहन्नारदीये—"अधःशिरा ऊर्द्ध्वपादाः कीलिताः स्तंभकद्वये। धूमपानरता नित्यं तिष्ठंत्याब्रह्मवत्सरम्"इति।"ब्रह्मचर्य्येण किं तस्य वैराग्येण च किं पुनः। पीतं येन तमालं वै श्वपचादधिको हि सः" इति पाद्मे। "धूमपानरतं विप्रं दानं दद्यात्तु यो नरः। स दाता नरकं याति ब्राह्मणो ग्रामशूकरः" इति स्कांदे। "ऊर्द्ध्ववस्त्रादधोवस्त्राद्धूमपानात्तथैव च। षड्भिर्विप्राः प्रणश्यंति हालाहलहलाहलैः" इति स्मृतेः। विप्राणां सर्वथा निषिद्धम्, अस्यकलिरूपत्वं सर्वेषामैक्यकरत्वाज्जगदुच्छिष्टत्वेनात एवास्य यन्त्रस्य कलिरिति संज्ञा। ननु गोविंदसिंहीयैः कैश्चिदेवं प्रत्युच्यते अस्मद्गुरुणा

विप्रमहत्त्वं न वर्णितमिति ब्राह्मणाः न मान्या अस्माभिरिति कथं धर्मावनाय तदभिव्यक्तिः । ब्राह्मणमहत्त्वं तु—"नन्वस्य ब्राह्मणा राजन् कृष्णस्य परमात्मनः । पुनंतः पादरजसा त्रिलोकीं दैवतं महत्॥" इति भागवते "अद्यापि श्रूयते राजन् द्वारकायां महोदधौ । अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनुः" इति । "इयं ब्राह्मणनौ राजन् विपरीता भवार्णवे । तरंत्यधोगता यस्यां मज्जंत्युपरिवर्त्तिनः" इति भारते । "ब्राह्मणो जन्मना श्रेयान्सर्वेषां प्राणिनामिह । तपसा विद्यया तुष्ट्या किमु मत्कलया पुनः" इति । "ब्राह्मणोऽस्य मुखमासीत्" इति वेदेनापि भगवद्रूपत्वमुक्तमततो धर्मावनं तु ब्राह्मणावनतन्महत्त्वप्रवर्त्तनद्वारैवेतिनिश्चीयते कथितवचनैरिति चेन्न, गोविंदसिंहेन स्वमुखेनैव वर्णितत्वाद्विप्रमहत्त्वस्य भाषापद्यैः—"क्षत्रि सभै कृत विप्रनके इनहीं पै कटाक्ष कृपाके निहारो" इत्यादिभिस्तथा तत्पित्रा त्यागबहादरनाम्नापि शक्रप्रस्थे यज्ञोपवीततिलकार्चनाद्यर्थमेव स्वशिरो दत्तमिति ये शिष्याः श्रीगोविंदसिंहोक्तग्रंथाभिप्रायज्ञास्तेऽधु-

नापि विप्रार्चनं कुर्वंति तदभिमतनीतिमार्गे चलंति च। तन्नीतिमार्गश्च यथा—"धार्मिकं पालनपरं सम्यक्परपुरंजयम्। राजानमभिमन्यंते प्रजापतिमिव प्रजाः॥पर्जन्य इव भूतानामाधारः पृथिवीपतिः। विकलेपि हि पर्जन्ये जीव्यते न तु भूपतौ॥ आत्मानं प्रथमं राजा विनयेनोपपादयेत्।ततोमात्यांस्ततो भृत्यांस्ततः पुत्रांस्ततः प्रजाः॥ राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः। लोकास्तदनुवर्त्तंते यथा राजा तथा प्रजाः॥ नृपाणां च नराणां च उभयोस्तुल्यमूर्त्तिता। आधिक्यं तु क्षमाधैर्यमाज्ञादानं पराक्रमः॥ सदानुरक्तप्रकृतिः प्रजापालनतत्परः। विनीतात्मा हि नृपतिर्भूयसीं श्रियमश्नुते॥ प्रजा न रंजयेद्यस्तु राजा रक्षादिभिर्गुणैः। अजागलस्तनस्येव तस्य राज्यं निरर्थकम्॥ प्रजापीडनसंतापात्समुद्भूतो हुताशनः। राज्ञः कुलं श्रियं प्राणान्नादग्ध्वा विनिवर्त्तते॥ उत्खातान् प्रतिरोपयन् कुसुमितांश्चिन्वन् लघून्वर्द्धयन्नत्युच्चान्नमयन्पृथूंश्च लघयन् विश्लेषयन्संहतान्। क्षुद्रान् कंटकिनो बहिर्नियमयन् स्वात्रोपिता-

न्पालयन्मालाकार इव प्रयोगनिपुणो राजा चिरं तिष्ठति ॥ सामैव हि प्रयोक्तव्यमादौ कार्यं विजानता । साम्ना सिद्ध्यन्ति कार्याणि विक्रियां यांति न क्वचित ॥ न विश्वसेदमित्रस्य मित्रस्यापि न विश्वसेत् । विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृंतति ॥ शपथैः संधितस्यापि न विश्वासे व्रजेद्रिपोः । राज्यलोभाद्यतो वृत्रः शक्रेण शपथैर्हतः ॥ उपकारगृहीतेन शत्रुणा शत्रुमुद्धरेत् । पादलग्नं करस्थेन कंटकेनेव कंटकम् ॥ नोपेक्षितव्यो विद्वद्भिरामयारिरवज्ञया । वह्निरल्पोपि संवृद्धः कुरुते भस्मसाद्वनम् ॥ कौर्मं संकोचमास्थाय प्रहारानपि मर्षयेत् । कालेकाले च मतिमानुत्तिष्ठेत्कृष्णसर्पवत् ॥ मा त्वं तात बले स्थित्वा बाधिष्ठा दुर्बलं जनम् । न हि दुर्बलदग्धानां कुले किंचित्प्ररोहति ॥ यानि मिथ्याभिभूतानां पतंत्यश्रूणि रोदताम् । तानि संतापकान् घ्नंति सपुत्रपशुबांधवान् ॥ ब्राह्मणेषु च ये शूराः स्त्रीषु जातिषु गोषु च । वृंतादिव फलं पक्वं धृतराष्ट्र पतंति ते ॥ देवब्रह्मस्वपुष्टानि सैन्यानि पृथिवीपतेः ।

युद्धकाले विशीर्यंते सैकताः सेतवो यथा ॥ प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् । एवं विद्वानविद्वांश्च ब्राह्मणो दैवतं परम् ॥ अदैवं दैवतं कुर्युर्दैवतं चाप्यदैवतम् । ब्राह्मणाः लोकपालांश्च सृजेयुश्चापि कोपिताः ॥ युगेयुगे च ये धर्मास्तेषु धर्मेषु ये द्विजाः । तेषां निंदा न कर्त्तव्या युगरूपा हि वै द्विजाः ॥ आक्रम्य ब्राह्मणैर्भुक्तं परिक्षीणैश्च बांधवैः । गोभिश्च नृपशार्दूल राजसूयाद्विशिष्यते ॥ न कालः खड्गमुद्यम्य शिरः कृंतति कस्यचित् । कालस्य बलमेतावद्विपरीतार्थदर्शनम् ॥ कितवा यं प्रशंसंति यं प्रशंसंति चारणाः । यं प्रशंसंति बंधक्यः स पार्थ पुरुषाधमः ॥ राजानो यं प्रशंसंति यं प्रशंसंति वै द्विजाः । साधवो यं प्रशंसंति स पार्थ पुरुषोत्तमः ॥ बहूनामप्यसाराणां समुदायोऽतिदारुणः । राज्ञा भृत्याः प्रकर्तव्यास्ते हि सर्वक्रियाक्षमाः ॥ ताडितोपि दुरुक्तोपि दंडितोपि महीभुजा । न चिंतयति यः पापं स भृत्यो हि महीभुजाम् ॥ योऽनाहूतः समभ्येति द्वारे तिष्ठति सर्वदा । पृष्टः सत्यं मितं ब्रूते स भृत्यो हि महीभुजाम् ॥ रिक्ताः

कर्मणि पटवस्तृप्तास्त्वलसा भवंति ये भृत्याः । तेषां जलौ-
कसामिव पूर्णानां रिक्तता कार्या ॥ क्रूरं व्यसनिनं लुब्धम-
प्रगल्भमथाकुलम् । मूर्खमन्यायकर्त्तारं नाधिपत्ये नियो-
जयेत ॥ नियोगिभिर्विना राज्यं नास्ति भूपे हि केवले ।
तस्मादमी विधातव्या रक्षितव्याः प्रयत्नतः॥ वेदवेदांगत-
त्त्वज्ञो जपहोमपरायणः । आशीर्वादपरो नित्यमेष राज-
पुरोहितः ॥ क्रमागतो हितमतिः सर्वभावपरीक्षकः । धीरो
यथोक्तवादी च एष दूतो विधीयते ॥ प्रवीणो वाक्पटु-
र्धीमान् स्वामिभक्तश्च नित्यशः । अलुब्धः सत्यवादी
च एष शासनलेखकः ॥ मेधावी वाक्पटुर्धीरो लघुहस्तो
जितेंद्रियः । शब्दशास्त्रपरिज्ञाता एष लेखक उच्यते ॥
इंगिताकारतत्त्वज्ञो बलवान् प्रियदर्शनः । समयज्ञः स्वामि-
भक्तः प्रतीहारः स उच्यते ॥ शूरोर्थशास्त्रनिपुणः कृतश-
स्त्रकर्मा संग्रामकेलिचतुरश्चतुरंगयुक्तः । भर्तुर्निदेशवशगोऽ-
भिमतश्च तंत्रे सेनापतिर्नरपतेर्विजयागमाय ॥ काणाः
कुब्जाश्च षंढाश्च तथा वृद्धाश्च पंगवः । एते स्वांःतःपुरे नित्यं
नियोक्तव्याः क्षमाभृता ॥ मंत्रतंत्रार्पितप्रीतिर्देशकालो-

चितस्थितिः । यश्च राज्ञि भवेद्भक्तः सोऽमात्यः पृथिवी-पतेः॥ अंतःसारैरकुटिलैः सुस्निग्धैः सुपरीक्षकैः । मंत्रि-भिर्धार्यते राज्यं सुस्तंभैरिव मंदिरम् ॥ नरपतिहितकर्ता द्वेष्यतां याति लोके जनपदहितकर्ता मुच्यते पार्थिवेंद्रैः। इति महति विवादे वर्तमाने समाने नृपतिजनपदानां दुर्लभः कार्यकर्ता॥ षट्कर्णो भिद्यते मंत्रश्चतुष्कर्णः स्थिरो भवेत् । द्विकर्णस्य तु मंत्रस्य ब्रह्माप्यंतं न गच्छति ॥ पृष्टो ब्रूते मितं ब्रूते पारिणामे सुखावहम् । मंत्री चेत्प्रिय-वक्ता स्यात्केवलं स रिपुः स्मृतः ॥ प्रसादो निष्फलो यस्य क्रोधो यस्य निरर्थकः । न तं भर्तारमिच्छंति वृद्धं पतिमिवांगनाः ॥ अविवेकिनि भूपाले नश्यंति गुणिनो गुणाः।प्रवासरसिके कांते यथा वंध्यास्तनोन्नतिः॥ गृध्राकारोपि सेव्यः स्याद्धंसाकारैः सभासदैः । हंसाका-रोपि स त्याज्यो गृध्राकारैः सभासदैः॥ यस्मिन्नेवाधिकं चक्षुरारोपयति पार्थिवः । कुलीनो वाकुलीनो वा स श्रियो भाजनं भवेत्॥राजमातरि देव्यां च कुमारे मुख्यमं-त्रिणि । पुरोहिते प्रतीहारे समं वर्तेत राजवत्॥स्वाम्यमा-

त्यश्च राज्यं च कोशो दुर्गबलं सुहृत् । एतावदुच्यते राज्यं सत्त्वबुद्धिव्यपाश्रयम् ॥" इति । "अनुगंतुं सतां वर्त्म कृत्स्नं यदि न शक्यते। स्वल्पमप्यनुगंतव्यं मार्गस्थो नावसीदति॥ पठतो नास्ति मूर्खत्वं जपतो नास्ति पातकम् । मौनिनः कलहो नास्ति न भयं चास्ति जाग्रतः ॥ अतिदानाद्बलिर्बद्धो नष्टो मानात्सुयोधनः। विनष्टो रावणो लौल्यादति सर्वत्र वर्जयेत्॥ जानंति पशवो गंधाद्वेदाज्जानंति वाडवाः । चाराज्जानंति राजानश्चक्षुर्भ्यामितरे जनाः ॥" इत्येवंविधा नीतिर्बहुधेत्यलं तत्प्रपंचेन ॥ ॥ यस्मै वीरवराय कैशिकमरेर्निस्त्रिंशदंभाद्ददौ निर्णिक्तं दधितैलकैः सुरभिभिः श्रीराजराजेश्वरी । चूडाधःसितपत्त्रिधो हयवरे संस्थः कृपासागरो हीरासिंहनराधिनाथमवताद्गोविंदसिंहो गुरुः ॥ ११ ॥

अहं तं गोविन्दसिंहं प्रणमामि गां वेदलक्षणां वाणीं विंदतीति गोविन्दः "गवादिषु विदेः संज्ञायाम्" इति शः। सिंचतीति सिंहः 'षिच् क्षरणे' "सिचेःसंज्ञायां हनुमौ कश्च" गोविन्दश्चासौ सिंहश्चेति गोविन्दसिंहस्तम्। तं कमित्याकांक्षायामाह—येनेति । येन कर्त्रा सकलसुरमुकुटमणिविद्योतितचरणारविन्दा नयनदा नयने नेत्रे ददातीति नयनदा नितरामति

शयेनाराधिता साक्षात्कृता । तां साक्षात्कृत्वा किं कृतमित्याकांक्षाया-माह—नीता इति । नीता प्राप्ता विनाशमदर्शनम् अखिला बहवो यवना अतिनीचाः, यवनानामतिनीचत्वं च—"नीचानां द्वे सहस्रे द्वे शते चैवाधि-कद्वये । तैः समो यवनः प्रोक्तो न नीचो यवनात्परः" इत्यभियुक्तोक्तेः । नितांतमेकांतम् "तीव्रैकांतनितांतानि" इत्यमरः । बहुविधा नानाविधाश्च-तुर्वर्गात्मिका इति यावत्, शिष्याः शासनयोग्याः कृता विहिताः। किंभूतेन येन बलशालिना पराक्रमवता । कीदृशं गोविन्दसिंहम् अमलं द्वादशमल-रहितम् "वसा शुक्रमसृग्मज्जा मूत्रं विट् कर्णत्वङ्नखाः । श्लेष्माश्रु दूषिका स्वेदो द्वादशैते मला नृणाम्" इति । उक्तमलरहितत्वं कथमित्यत आह—पूर्णमिति । व्यापकत्वान्मलरहितत्वमिति भावः ॥ ११ ॥

इत्येवमारचितमेतदतीव दिव्यं
स्तोत्रं सुविप्रकमलाधरसंज्ञकेन ॥
मानप्रतापशिवदं भवहं गुरूणां
पाठेन चास्य कमलाधरलोकमेति ॥ १२ ॥

इति श्रीनानकादिगुरुस्तोत्रं समाप्तम् ।

इति शब्दः समाप्तौ "प्रादुर्भावे समाप्तौ च इति शब्दः प्रकीर्त्तितः ।" इति धनंजयः । एवं शक्तिगुरुनानकादि-स्तुतिपरंपरया आरचितम् । एतत् प्रत्यक्षबुद्धिविषयम् । "इदमः प्रत्यक्षगतं समीपतरवर्त्ति चैतदो रूपम् । अद-

स्तु विप्रकृष्टं तदिति परोक्षे विजानीयात् ॥" इति ।
स्तोत्रं स्तवनम् । किंभूतम्—अतीवदिव्यं निर्भरमनोहारि
"अतीव च निर्भरे" इत्यमरः । सुविप्रकमलाधरसंज्ञ-
केन स्विति प्रसिद्धौ लक्ष्मीनारायणनाम्ना । केषां स्तोत्रं
रचितमित्यत आह—गुरूणामिति । पुनः किंभूतम् । मान-
तापशिवदं मानाश्चित्तसमुन्नतिः "मानं प्रमाणे प्रस्थादौ
मानाश्चित्तोन्नतौ ग्रहे ॥" इति हैमः । प्रतापस्तेजः "प्रताप-
तापतेजसोः" इति मेदिनी । "अधिक्षेपापमानादेः प्रयुक्त-
य परेण यत् । प्राणात्ययेप्यसहनं तत्तेजः समुदाहृतम् ॥"
ति भरतोक्तम् । तेजःप्रदं शिवो मोक्षादिकं तान् ददा-
ति तत् । पुनः किंभूतम्—भवहं संसारापहं अस्य स्तोत्र-
य पाठेन पाठकर्ता कमलाधरस्य विष्णोर्लोकं वैकुण्ठा-
ख्यमंति प्रयातीति । अत्र वसंततिलकावृत्तं तल्लक्षणं तु-
उक्ता वसंततिलका तभजा जगौ गः" इति । न च "अ-
थिता नयनदा नितरां हि येन ॥" इत्यत्राव्याप्तिरंत-
यागुरुत्वादिति वाच्यं पादांत्यस्यापिगुरुत्वाङ्गीकारात् । न
समपादांत्यस्यैव गुरुत्वं न तु विषमपादांत्यस्यात एव

काव्यप्रकाशकृतोक्तं-"विकसितसहकारभारहारिपरिमल-पुंजितगुंजितद्विरेफः।" इति। अत्र पारिमलपदं त्यक्त्वा पूर्व चरणवर्णस्य गुरुत्वार्थं प्रमुदित इति पाठो युक्त इति। अत्र येनेत्यस्य विषमपादांत्यस्य लघोरनुस्वारादिपरत्वाभावादव्याप्तिः पुनरिति वाच्यम्, "दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवांधकारम्॥" इत्यादिकविप्रयोगाल्लघोरपि विषमपादांत्यस्य गुरुत्वांगीकारादिति। "वृंदारण्ये रसिकसुखदे संस्थिताया नितांतं श्रीराधाया वदनकुमुदं द्योतयन्कृष्णचंद्रः॥ हीरासिंहं नरपतिवरं सर्वदासर्वदस्तं पायाद्बंधो निखिलविबुधैः फुल्लकुल्यावतंसम्॥ १२॥

हीरासिंहे धरानाथे जाते जातकटक्षणाः। नरा नागरिका नार्यो राजंते राजकांतयः॥ १॥

हीरासिंहनरेंद्रकीर्तिकारिणी संवारितापि क्षणाद्द्राक्स्तृण्या निगडैरकार्यरचितैर्बद्धापि यत्नेन सा। वैरिव्रातनिषादि-बलयुतैर्यक्षाभिभूयाखिलान्निर्यांता विपिनानि लंध्य-जलधेः पारं सुमार्गे स्थिताः॥२॥ निशांते निशांतं गतः शांतचित्तो निशंको निशांतान्निशां तत्र नीत्वा। स गोप्याः

प्रियायाः प्रियापादलग्नः प्रपायात्प्रपन्नार्तिहर्त्ता हरिर्नः ॥ ३ ॥ पत्तने खरडे दिव्ये कौशिकान्वयजो द्विजः । नायकायनको गौडो बलरामो बभूव ह ॥४॥ ततस्तु भूधरो जातस्ततो गौरीप्रसादकः । सुखदेवस्ततो धीमान् गज्जूरामस्ततोऽभवत् ॥ ५ ॥ निक्कारामो महात्मातः श्रीमद्वंशीललामकः । विश्वशास्त्रादिनिष्णातो विख्यातो जगतीतले ॥ ६ ॥ लक्ष्मीनारायणेनैष तत्सुतेन कृतो मया । स्वकृतस्य नवस्यास्य कह्लारामोदनामकः ॥७॥ वह्निगुणाङ्कचन्द्रेऽब्दे माधवासितपक्षके । सप्तम्यां पुष्यसूर्याभ्यां युक्तायां पुष्पितो ह्ययम् ॥ ८ ॥

इति श्रीसमस्तलोकोपद्रवनिरतकेशिकंसाद्यनेकदनुजदलनदक्षचक्रनन्दककौमोदक्यादिप्रदीप्यमानभुजदंडचंचद्विग्रहश्रीमन्नन्दनंदनपत्पंकजरसास्वादनचंचरीकायमाणमानसश्रीधरात्मजलक्ष्मीनारायणकृतनानकादिगुरुस्तोत्रकह्लारामोदव्याख्यासमाप्ता ।

इति शब्दः समाप्त्यर्थकः । एवं देवीश्रीनानकादिस्तुतिपरंपरया सुविप्रकमलाधरसंज्ञकेन गुरूणामेतत्स्तोत्रमारचितं निर्मितम् । अस्य स्तोत्रस्य

पाठेन पाठक इत्याक्षेपात् लभ्यते, कमलाधरो विष्णुस्तस्य लोकं वैकुंठम् एति गच्छति ॥ १२ ॥

सर्वत्र जातिस्तु वसंततिलका । तल्लक्षणं च—"उक्ता वसन्ततिलका तभजा जगौ गः" इति । न च "आराधिता नयनदा नितरां हि येन" इत्यादावव्याप्तिरंतगुरुत्वाभावादिति वाच्यम्, "अभिनयापरिचेतुमिवोद्यता मलयमारुतकंपितपल्लवा । अमदयन्सहकारलतामनः सकलिका कलिकामजितामपि" इत्यादौ कालिदासेन "श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि । वसन्ददर्शावतरंतमंबराद्धिरण्यगर्भांगभुवं मुनिं हरिः ॥" इत्यादौ माघेन, "निपीय यस्य क्षितिरक्षिणः कथास्तथाद्रियंते न बुधाः सुधामपि । नलः सितच्छत्रितकीर्तिमंडलः स राशिरासीन्महसां महोज्ज्वलः" इत्यादौ श्रीहर्षेण च पादांतस्थस्य विकल्पेन गुरुत्वांगीकारात् ॥ दुर्गां सुराध्य विधिना जगतो हिताय शिष्यान्विधाय विविधान् सकलार्त्तिहारी । म्लेच्छान्विनाश्य विकटान् मुमुदे शुभं नो गोविन्दसिंहगुरुकः प्रददातु नित्यम् ॥

इति श्रीमत्सकललोकपालवृन्दवंदितपदारविन्दकन्दनन्दितधरेन्द्रधरामरधरणीपालनावतारामितकारुण्यपूर्णगोविन्दचरणारविन्दपूजकश्रीमत्कमलाधरकृता गुरुस्तवदीपिका समाप्ता ।

॥ समाप्तोऽयं ग्रन्थः ॥

---

पता—खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" स्टीम्—प्रेस—बंबई.

## अत्रेयमभ्यर्थना.

अत्रास्माकं मुद्रणालये ऋग्वेदादयो वेदा उपनिषदो वेदान्तग्रंथा महाभारतादीतिहासाः श्रीमद्भागवतादि-महापुराणोपपुराणानि धर्मशास्त्र-कर्मकाण्ड-व्याकरण-न्याय-योग-सांख्य-मीमांसादि-शास्त्रीयग्रन्थाः काव्य-नाटक-चम्पू-प्रभृतयो ग्रन्थाः सहस्रनामाद्यनेक-स्तोत्रग्रन्थाश्च विविधभाषाग्रन्थाश्च सीसकोत्तममहदक्षरैर्मनोहरं मुद्रिता आसते योग्यमूल्येन क्रय्याः सन्ति तांश्च ग्राहका यथापुस्तकसूचीपत्रं मूल्य-प्रेषणेन प्राप्नुयुः ।

अधिकमस्मदीयसूचीपुस्तकानां भिन्नभिन्नविषयाणां प्रापणेन "श्रीवेङ्कटेश्वरसमाचार" पत्रिकाप्रापणद्वारा च ज्ञेयमिति शम् ।

खेमराज श्रीकृष्णदास,

"श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणालयाध्यक्ष-मुंबई.

